# KALYĀṆAMALLA'S

## ANAṄGARAṄGA

Critically edited with Introduction
and Notes

BY
RICHARD SCHMIDT
Münster University ( GERMANY )

( नितान्तं गोपनीयम् )

महाकवि कल्याणमल्लविरचितम्

# अनंगरंगम्

पुस्तक प्राप्तिस्थानम्—
पंजाब संस्कृत पुस्तकालय लाहौर ।
१९२७

# INTRODUCTION.

Kalyāṇamalla's Anaṅgaraṅga has been edited, as far as I know twice in India, namely, (1) by Rāmacandra Śāstrī, Lahore 1920, with a bhūmikā and a small gloss, and (2) by Viṣṇuprasādabhaṇḍārin, Kāśī 1923 (=No. 9 of Haridās' Saṃskṛtagranthamālā), with a short bhūmikā and useful notes. Nevertheless, the work of Kalyāṇa thoroughly deserve our interest, because it is one of the best कामशास्त्र texts written in the language of the gods. It is by this reason that I have undertaken the attempt to publish a new and, as I hope a critical edition of the Anaṅgaraṅga. Rāmacandra Śāstrī based his edition on one single manuscript and in his Preface freely states that owing to circumstances his book is not perfect one. [ग्रंथस्यात्रत्यमौपधिप्रकरणं सम्यग् विशदयितुं समीहावानास्मं तथापि शीघ्रमस्य मुद्रापयिष्यमाणत्वात्कार्यान्तरव्यासङ्गवशाच्च समयमलभमानस्तथा कर्तुं नापारयमित्यौपधिप्रकरणमस्पृष्टमेवात्याक्षम् । आशासे यदि जगदीशोऽनुकूलयिष्यति तर्हि द्वितीयसंस्करणे सर्वं सम्यक् समाधातास्मि ।] Moreover there are in his edition a great many blunders and no good readings. As for Visṇuprasādabhaṇḍārin's edition, it is based upon Rāmacandra's text and three manuscripts, only one of which is complete and शुद्धप्रायं, as the editor himself says.

I copied first in 1899 the Berlin manuscript No. 595=Chambers 159 (Weber I, 172) i paper very much damaged and text therefore mutilated. Signed B.

Then I collated the India Office manuscript No 1801 (Eggeling's Catalogue, Vol. III, p. 361), fairly written in Nāgarī. Signed IO.

Later on I copied the two Poona manuscripts No. 204 and 238 (signed **P 204** and **P 238** respectively) and **R**=Report...by Ramkrishna Gopal Bhandarkar, Bombay 1894, No. 317. Lastly I got, by the kindness of Mr. F. W. Thomas and the Chief-Librarian of the Madras Library, a most carefully prepared copy and collation of the six manuscripts deposited there. **M** is the archetypus; क, ख, ग, घ, ङ correspond to the

library reference numbers 3-4-27; 3 3-24; 4B 7-6; 4B-7-7; and 3-1-43 respectively.

As may be expected, I thoroughly collated also the two printed texts: L=the Lahore edition, V=that of Viṣṇuprasādabhaṇḍārin.

Kalyāṇamalla wrote his book for the amusement of Lāḍ Khān, son of Ahmad, who is styled to have been the crown of the Lodī House. Owing to the fact that there Lodī kings immediately preceded the Timur House in the person of Baber Shah, the Anangaranga may have been composed in the XVIth century of the the Christian era. Nothing more can be said about the author and his life-circumstances with any certainty. But we learn from the introductory stanzas that he borrowed his deeds and teachings from elder sources:

मतानि दृष्ट्वा बहुशो मुनीनां तत्सारमादाय निरूपयामि ।

"Having manifoldly examined the opinions of the sage men, and extracted the essence of them, I compose (my book)." This we are also told by the whole work. Indian tradition enumerates a pretty large number of authors who wrote on the present subject e.g. Auddālaki, Bābhravva, Dattaka, Cārāyaṇa, Suvarṇanābha, Ghoṭakamukha, Gonardīya, Goṇikāputra, Kucumāra, Vātsyāyana, Kokkoka, Kaviśekhara Jyotīśvara Jayadeva, Bhānudatta etc, and plenty of titles are known, vid. Anangatilaka, Anangadīpikā, Anangaśekhara, Kandarpacūḍāmaṇi, Kāmaprakāśa, Kāmaprabodha, Kāmasāra, Nāgarasarvasvam, Pañcasāyaka, Madanasaṃjīvanī, Madanārṇava, Yogaratnāvalī, Ratimañjarī, Ratisarvasvam, Ratisāra, Vātsyāyanasūtrasāra (by Kṣemendra), Veśyānganākalpa, Śṛngārasāriṇī, Strīvilāsa, Smaratattvaprakāśikā, Smradīpikā, Smararahasyavyākhyā, and many others.

Only a small number of these texts have been printed, by far, most of them being known by name only.

Münster } R. Schmidt

# विषयसूची ॥


| विषयः | | | पृष्ठम् |
|---|---|---|---|
| ( प्रथमः स्थलः ) | | | |
| मङ्गलाचरणप्रशस्त्यादि | ... | ... | १ |
| पद्मिनीलक्षणम् ... | ... | ... | २ |
| चित्रिणीलक्षणम् ... | ... | ... | २ |
| शङ्खिनीलक्षणम् ... | ... | ... | ३ |
| हस्तिनीलक्षणम् ... | ... | ... | ३ |
| नलिनीप्रभृतीनां सुखतिथयः | ... | ... | ३ |
| ( द्वितीयः स्थलः ) | | | |
| पद्मिनीप्रभृतीनां साधारणी चन्द्रकला | | ... | ४ |
| पृथक्पद्मिन्याशशिकलोच्यते | ... | ... | ५ |
| चित्रिण्याश्चन्द्रकला | ... | ... | ५ |
| शंखिन्याश्चन्द्रकला ... | ... | ... | ६ |
| हस्तिन्याश्चन्द्रकला ... | ... | ... | ७ |
| ( तृतीयः स्थलः ) | | | |
| शशमृगादिभेदेन सुरतभेदनिरूपणम् | | ... | ८ |
| शशस्वरूपं ... | ... | ... | १० |
| वृषभलक्षणम् ... | ... | ... | १० |
| अश्वलक्षणम् ... | ... | ... | १० |
| मृगीलक्षणम् ... | ... | ... | ११ |
| वडवालक्षणम् ... | ... | ... | ११ |
| करिणीलक्षणम् ... | ... | ... | ११ |
| ( चतुर्थः स्थलः ) | | | |
| अथाङ्गनानां समानधर्मा निरूप्यन्ते | | ... | १२ |
| प्रकृतिलक्षणानि ... | ... | ... | १३ |

| विषयः | पृष्ठम् |
|---|---|
| देवसत्त्वादिनिरूपणम् ... ... | १३ |
| स्त्रीणां नाशहेतवः ... ... ... | १५ |
| स्त्रीणां वैराग्यहेतवः ... ... | १५ |
| विरक्ता लक्षणानि ... ... ... | १५ |
| प्रीतिलक्षणम् ... ... ... | १५ |
| भोजनादिव्यवस्था ... ... | १६ |
| योनिस्वरूपम् ... ... ... | १६ |
| अल्पसाध्यालक्षणम् ... ... | १७ |
| रताभिलाषचिन्हानि ... ... | १७ |
| ( पंचमः स्थलः ) | |
| वनितानां देशधर्मनिरूपणम् ... ... | १८ |
| ( षष्ठः स्थलः ) | |
| द्रावणादियोगाः ... ... ... | २१ |
| स्तम्भनविधिः ... ... ... | २२ |
| बाजीकरणविधिः ... ... ... | २३ |
| लिङ्गस्थूलीकरणम् ... ... | २४ |
| योनिसङ्कोचविधानम् ... ... | २५ |
| योनिसंस्कारः ... ... ... | २६ |
| लोमशातनम् ... ... ... | २६ |
| नष्टपुष्पसमुद्भवविधिः ... ... | २६ |
| पुष्पाधिक्य निवारणम् ... ... | २६ |
| गर्भाधानम् ... ... ... | २७ |
| गर्भस्तम्भनविधिः ... ... ... | २७ |
| सुखप्रसवविधिः ... ... ... | २८ |
| बन्ध्यात्वापादनम् ... ... ... | २८ |
| कोष्ठोद्भवरञ्जनविधिः ... ... | २६ |
| केशश्वेतीकरणम् ... ... ... | २६ |
| मुखकण्टकनिवारणम् ... ... | ३० |

| विषयः | | | पृष्ठम् |
|---|---|---|---|
| मुखनीलीहरणम् ... | ... | ... | ३० |
| कुचसंस्कारः ... | ... | ... | ३० |
| ( सप्तमः स्थलः ) | | | |
| वशीकरणादिकम् ... | ... | ... | ३१ |
| तिलकविधिः ... | ... | ... | ३१ |
| अञ्जनविधिः ... | ... | ... | ३२ |
| चूर्णविधिः ... | ... | ... | ३२ |
| भक्षणविधिः ... | ... | ... | ३२ |
| लेपविधिः ... | ... | ... | ३३ |
| धूप विधिः ... | ... | ... | ३३ |
| कामेश्वरमन्त्रः ... | ... | ... | ३३ |
| चामुण्डामन्त्रः ... | ... | ... | ३४ |
| पद्मिनीवशीकरणम् | ... | ... | ३४ |
| चित्रिणीवशीकरणम् | ... | ... | ३४ |
| शङ्खिनीवशीकरणम् | ... | ... | ३४ |
| हस्तिनी वशीकरणम् | ... | ... | ३५ |
| अङ्गरागादिकविधिः | ... | ... | ३५ |
| स्नानीयसुगन्धिः ... | ... | ... | ३६ |
| सामान्यसुगन्धिः ... | ... | ... | ३६ |
| सर्वोत्तमसुगन्धिः ... | ... | ... | ३६ |
| मुखवासविधिः ... | ... | ... | ३७ |
| ( अष्टमः स्थलः ) | | | |
| विवाहाद्युद्देशः ... | ... | ... | ३८ |
| कन्याशुभलक्षणानि | ... | ... | ३८ |
| कन्यादूषणानि ... | ... | ... | ३८ |
| जामातृलक्षणानि ... | ... | ... | ३९ |
| जामातृदूषणानि ... | ... | ... | ३९ |
| परस्त्रीगमननिषेधः | ... | ... | ३९ |

| विषयः | | | पृष्ठम् |
|---|---|---|---|
| कारणवशात्परस्त्रीगमनेऽनवद्यत्वम् | | ... | ४० |
| अगम्याः स्त्रियः ... | ... | ... | ४० |
| दूत्यः ... | ... | ... | ४० |
| सुखसाध्यालक्षणानि | ... | ... | ४१ |
| अनुरागिणीलक्षणम् | ... | ... | ४१ |
| दुःसाध्यालक्षणानि | ... | ... | ४२ |
| सुरते त्याज्यस्थानानि | ... | ... | ४२ |
| विहितप्रदेशः ... | ... | ... | ४२ |

( नवमः स्थलः )

| | | | |
|---|---|---|---|
| बाह्यसम्भोगविधानम् | ... | ... | ४४ |
| परिरम्भणलक्षणानि | ... | ... | ४४ |
| चुम्बनभेदाः ... | ... | ... | ४६ |
| नखदानविधिः ... | ... | ... | ४८ |
| दशनविधानम् ... | ... | ... | ४६ |
| केशग्रहणोद्देशः ... | ... | ... | ५० |

( दशमः स्थलः )

| | | | |
|---|---|---|---|
| सुरतभेदा ... | ... | ... | ५२ |
| तत्रादावुत्तानबन्धा | ... | ... | ५२ |
| तिर्यग्बन्धः ... | ... | ... | ५४ |
| उपविष्टबन्धः ... | ... | ... | ५५ |
| स्थितबन्धः ... | ... | ... | ५६ |
| व्यानतबन्धः ... | ... | ... | ५७ |
| पुरुषायितबन्धः ... | ... | ... | ५७ |
| सीत्कृतभेदाः ... | ... | ... | ६० |
| अष्टनायिकालक्षणानि | ... | ... | ६० |

॥ श्रीः ॥

# अथानङ्गरङ्गः प्रारभ्यते ।



[1] अतिललितविलासं विश्वचेतोनिवासं
समरकृतविकाशं शम्बराख्यप्रणाशम् ।
रतिनयनविरामं संततं चाभिरामं[2]
प्रसभविजितवामं शर्मदं नौमि कामम् ॥ १ ॥

लोदीवंशावतंसो हतरिपुवनितानेत्रवारिप्रपूर-
प्रादुर्भूतासु सिन्धुष्वमितवरयशा[3] लीलया प्लावितास्वः[4] ।
तत्पुत्रः[5] ख्यातकीर्तिरहमदनृपतेः कामसिद्धान्तविद्वा-
ञ्जीयाच्छ्रीलाडखानः क्षितिपतिमुकुटैर्घृष्टपादारविन्दः[6] ॥ २ ॥

अस्यैव कौतुकनिमित्तमनङ्गरङ्गं[7]
ग्रन्थं विलासिजनवल्लभमातनोमि[8] ।
श्रीमान्महाकविरशेषकलाविदग्धः[9]
कल्याणमल्ल इति भूपमुनिर्यशस्वी[10] ॥ ३ ॥

मतानि[11] दृष्ट्वा बहुशो[12] मुनीनां
तत्सारमादाय निरूपयामि ।
अतोऽङ्गनाकेलिकलानुरागै-
र्ग्राह्यः सदाऽयं पुरुषैः सभावम्[13] ॥ ४ ॥

निःसारे जगति प्रपञ्चसदृशे सारं कुरङ्गीदृशा-
मेकं भोगसुखं परात्मपरमानन्देन तुल्यं विदुः ।

तज्जात्यादिविवेकमूढमनसो[14] लब्ध्वापि नानाङ्गना
संविन्दन्ति न कामतन्त्रविकलाः[15] पश्वादिवन्मानवाः ॥५॥

पद्मिनी चित्रिणी चाथ शङ्खिनी हस्तिनी ततः[16] ।
पूर्वपूर्वतरास्तासु श्रेष्ठास्तल्लक्ष्म चक्ष्महे[17] ॥ ६ ॥

॥ अथ पद्मिनीस्वरूपं निरूप्यते ॥

भ्रान्तारक्तकुरङ्गशावनयना[18] पूर्णेन्दुतुल्यानना
पीनोत्तुङ्गकुचा शिरीषमृदुला स्वल्पाशना दक्षिणा ।
फुल्लाम्भोजसुगन्धिकामसलिला लज्जावती मानिनी
श्यामा कापि[19] सुवर्णचम्पकनिभा[20] देवादिपूजारता ॥ ७ ॥

उन्निद्राम्बुजकोशतुल्यमदनच्छत्रा[21] मरालस्वना
तन्वी हंसवधूगतिः सुललितं वेषं सदा बिभ्रती ।
मध्यं चापि[22] वलित्रयाङ्कितमसौ शुक्लाम्बराकाङ्क्षिणी
सुग्रीवा शुभनासिकेति[23] गदिता नार्युत्तमा पद्मिनी ॥ ८ ॥

॥ अथ चित्रिणी लक्षणानि ॥

तन्वङ्गी गजगामिनी चपलदृक्सङ्गीतशिल्पान्विता
नो ह्रस्वा न बृहत्तराथ सुकृशा मध्ये मयूरस्वना[24] ।
पीनश्रोणिपयोधरा सुललिते जङ्घे वहन्ती कृशे
कामाम्भो मधुगन्धयथोष्ठमपि[25] सा बिम्बोपमं[26] वत्सला ॥ ९ ॥

कामागारमसान्द्रलोमसहितं मध्ये मृदु प्रायशो
बिभ्रत्युल्लसितं च वर्तुलमथो रत्यम्बुनाऽढ्यं सदा[27] ।
भृङ्गीश्यामलकुन्तलाथ[28] जलजग्रीवोपभोगे रता
चित्रासक्तिवती[29] रतेऽल्परुचिका ज्ञेयाङ्गना चित्रिणी ॥१०॥

॥ अथ शङ्खिनी लक्षणानि ॥

दीर्घं बाह्यशिरं कृशं[30] पृथुमथो देहं वहन्ती तथा
पादौ दीर्घतरौ कटिं च बृहतीं स्वल्पस्तनी कोपिनी ।
गुह्यं क्षारविगन्धिना स्मरजलेनाल्पेन सान्द्रैः कचै-
रानिम्नं कुटिलेक्षणा[31] द्रुतगतिः सन्तप्तगात्रा भृशम् ॥११॥

सम्भोगे करजक्षतानि बहुशो यच्छन्त्यनङ्गाकुला
न स्तोकं न च भूरि भक्षति[32] सदा प्रायो भवेत्पित्तला ।
स्रग्वस्त्राण्यरुणानि वाञ्छति दयाहीना[33] च पशुन्यैर्भृ-
त्पिङ्गा दुष्टमनाश्च घर्घरमहारूक्षस्वरा[34] शङ्खिनी ॥१२॥

॥ अथ हस्तिनी लक्षणानि ॥

स्थूला पिङ्गलकुन्तला च बहुभुक् क्रूरा त्रपावर्जिता[35]
गौराङ्गी कुटिलाङ्गुलीकचरणा[36] ह्रस्वानमत्कन्धरा ।
बिभ्रत्यैभमदाम्बुगन्धि[37] रतिजं तोयं भृशं मन्दगा[38]
दुःस्साध्या सुरते ऽतिगद्गदरवा स्थूलोष्ठिका हस्तिनी ॥१३॥

॥ अथ नलिनीप्रभृतीनां सुखतिथय उच्यन्ते ॥

वेदार्काग्निन्दुशरप्रसंख्यतिथयः प्रोक्ता नलिन्या रते
भोग्यादित्यदशर्तुसंख्यतिथिषु[39] प्रीता भवेच्चित्रिणी[40] ।
रुद्राम्भोधिगुणासमेषुतिथिषु[41] प्रायो द्रवेच्छङ्खिनी
राकादर्शचतुर्दशीग्रहमितास्वेति द्रवं हस्तिनी[42] ॥१४॥

रात्रेश्चतुर्थचरणे नलिनी द्रवत्वं[43]
संयाति चित्रदयिता प्रथमे ऽथ[44] यामे ।
प्रीत्यै[45] तृतीयचरणः[46] खलु शङ्खिनीनां
नक्तं दिनार्धमपि हस्तिवधूजनानाम्[47] ॥१५॥

रजनीसुरतेषु पद्मिनी
न सुखं याति निसर्गतः क्वचित् ।
दिवसे शिशुयोगतो[48] ऽपि सा
विकसत्यम्बुजिनी यथा[49] रवेः[50] ॥१६॥

इति श्रीलाडखानविनोदाय महाकवि --- ---- --चिते-
ऽनङ्गरङ्गे पद्मिन्यादिजातिवर्णनो नाम
प्रथमः स्थलः ॥ १ ॥



# अथ द्वितीयः स्थलः ।

—:०:—

॥ अथ पद्मिनीप्रभृतीनां साधारणी चन्द्रकला
निरूप्यते ॥

सीमन्ताक्ष्यधरे कपोलगलके कक्षाकुचोरःस्थले[1]
नाभिश्रोणिवराङ्गजानुविषये[2] गुल्फे पदे ऽङ्गुष्ठके ।
कृष्णाकृष्णविभागतो[3] मनसिजस्तिष्ठत्क्रमाद्रोपितां
वामाङ्गेष्वथ ऊर्ध्वतो ऽभिगमनान्मासस्य पक्षद्वये ॥ १ ॥

सीमन्ते करजं ददीत नयने गण्डे ऽपि संचुम्बनं
दन्तेनाधरखण्डनं च नखरैः कक्षां सकण्ठां लिखेत् ।
श्रोणीं चाथ कुचं करेण सुदृढं गृह्णीत नाभौ पुनः
संदद्याच्च चपेटकं[4] स्मरगृहे मातङ्गलीलायितम् ॥ २ ॥

कुर्याद्वक्षसि ताडनं तु शनकैर्मुष्ट्यासकृद्बुद्धिमा-[5]
ञ्जान्वङ्गुष्ठपदेषु गुल्फविषये तैरात्मनो घातनम्[6] ।

इत्थं चन्द्रकलाप्रदीपनविदो[7] रागान्विता भोगिनो
नीत्वा[8] स्वीयवशं कुरङ्गनयनां[9] विन्दन्ति सौख्यं परम् ॥ ३ ॥

॥ अथ तासामेव पृथक्तया शशिकलोच्यते ॥

कण्ठे संश्लिष्य गाढं मृदु करजचयं गण्डपाल्यां नितम्बे[10]
पृष्ठे पार्श्वोदरे वा विदधदथ रदैः[11] खण्डयन्दन्तवासः ।
प्रेम्णा चुम्बँल्ललाटं वपुषि च जनयन रोमहर्षं नितान्तं
सीत्कारप्रायवक्त्रां प्रतिपदि[12] नलिनीं द्रावयेन्ना[13] विदग्धः ॥ ४ ॥

संचुम्ब्य दन्तवसनं जघने कपोले
पादद्वये स्तनयुगे च नखानि दत्त्वा[14] ।
प्रायः प्रबुद्धमदनां[15] युगलाख्यतिथ्यां[16]
कामी नयेद्द्रवदशां[17] नलिनीं सहर्षम्[18] ॥ ५ ॥

गाढालिङ्गनपूर्वकं कुचयुगं संपीड्य दन्तच्छदं
दष्ट्वा[19] चाशु रदैरथोरुफलके यच्छन्नखान्यादरात्[20] ।
दोर्मूले सहसासकृच्छुरितकं कुर्वंश्चतुर्थ्यां तिथौ[21]
कामं संप्रतिबोध्य चन्द्रकलया कुर्यान्निजां पद्मिनीम्[22] ॥ ६ ॥

दष्ट्वाधरं तदनु पीनकुचौ[23] विमर्द्य
प्रायेण चूचुकयुगं[24] परिगृह्य रागात् ।
केशांस्तु[25] दक्षिणकरेण विकृष्य मन्दं
कुर्यात्सुविह्वलतनुं किल पञ्चमीषु ॥ ७ ॥

॥ अथ चित्रिण्याश्चन्द्रकला ॥

अधरं परिचुम्ब्य कन्धरा-
मथ संश्लिष्य नखैर्नितम्बकम् ।

विलिखन्द्रुतमेव चित्रिणीं
ननु[26] षष्ठ्यां द्रवतां नयेन्नरः ॥८॥

कण्ठे संपरिरभ्य बाहुलतया नाभिं[27] लिखन्पाणिजैः
दष्ट्वा चापि रदच्छदं सपुलकं गृह्णन्नुरोजद्वयम्[28] ।
कुर्वन्मन्मथमन्दिरे करिकरक्रीडायितं बुद्धिमा-
नष्टम्यां स्मरवारिनिर्झरवतीं[29] कुर्वीत चित्रप्रियाम् ॥९॥

कर्णोरुस्तनमध्यपृष्ठमदनागारेषु कक्ष्यां तथा
कामिन्या निजवामपाणिकमलं कान्तः समालोडयन्[30] ।
ग्रीवां[31] पाणिरुहैर्लिखंश्च शनकैश्चुम्बंल्ललाटं भृशं
कुर्यादाशु विसृष्टमन्मथजलां रामां दशम्यां तिथौ ॥१०॥

गाढं संपरिरभ्य गण्डफलके[32] चुम्बन्दशंश्चाधरं[33]
कर्णश्रोणिनखप्रदानरसिकः कुर्वन्निमेषं दृशोः[34] ।
सङ्कर्षंश्चिकुरान्विलासकुशलः[35] सीत्कारयुक्तां प्रियां
द्वादश्यां त्वरयातिविह्वलतनुं कुर्यात्पुमांश्चित्रिणीम् ॥११॥

॥ अथ शङ्खिन्याश्चन्द्रकला ॥

बाहुभ्यां[36] परिरभ्य गाढमधरं दन्तैर्दशन्निर्दयं
दोर्मूले खरपाणिजक्षतचयं[37] यच्छन्यथेष्टं भृशम् ।
संकुर्वञ्च्छुरितं कुचद्वयतटे नूनं तृतीयातिथौ[38]
मुक्तानङ्गजलां स्वकीयवशगां कुर्यान्नरः[39] शङ्खिनीम् ॥१२॥

वक्षःकपोलगलकर्णपदेषु यच्छ-
न्प्रायो नखानि परिरभ्य कृतास्यपानः[40] ।
गाढं बिमर्द्य मदनालयमाशु रीं न
संद्रावयेन्नरवरः किल सप्तमीषु ॥१३॥

परिरभ्य दृढं रदच्छदं
पिबन्नाघातरतो वराङ्कके[41] ।
नखरैः परितो विदारय-
न्स्ववशं शम्भुतिथौ[42] नयेत्प्रियाम् ॥१४॥

विलिखन्नखरैः[43] शिरोधरा-
मथ गृह्णंश्च कुचौ ससीत्कृतम्[44] ।
परिचुम्ब्य कपोलमङ्गनां
श्लथयेदाशु तिथौ मनोभुवः[45] ॥१५॥

॥ अथ हस्तिनीचन्द्रकला ॥

मदनसदनमुच्चैर्मर्दयन्नाभिमूले
तरलितनिजपाणिर्दन्तवासो निपीय[46] ।
मृदुतरकरजाग्रैः संलिखन्पार्श्वदेशं[47]
कलितकुच इभीनां[48] वल्लभः स्यान्नवम्याम् ॥१६॥

नयने परिचुम्ब्य कक्षयो-
र्नखराघातरतः स्मरालये ।
रचयन्करिकेलिमानये-
त्स्ववशं शम्भुतिथौ[49] द्विपाङ्गनाम् ॥१७॥

नानालिङ्गनचुम्बनानि रचयन्प्रायेण तीक्ष्णैर्नखैः[50]
कक्षोरुस्तनमण्डलान्यकरुणं संदारयन्केलिषु[51] ।
कामागारचुचूलिकाञ्चितकरः[52] संत्यक्तरत्यम्बुकां
दर्शे पूर्णतिथौ च निःसहतनुं[53] कुर्यान्नरो हस्तिनीम् ॥१८॥

इति श्रीलाडखानविनोदाय महाकवि कल्याणमल्लविरचिते
ऽनङ्गरङ्गे चन्द्रकलानिरूपणं नाम
द्वितीयः स्थलः ॥ २ ॥

# अथ तृतीयस्थलः ।

॥ अथ शशमृग्यादिभेदेन सुरतभेदो निरूप्यते ॥

आरोहैर्मदनाङ्कुशस्य पुरुषा ज्ञेयाः सदाथ स्त्रियो
योनीनां परिणाहकै रसनवादित्याङ्गुलीकैः क्रमात्[1] ।
जात्या ते तु नराः[2] शशाश्च वृषभा अश्वास्तथैवाङ्गना
मृग्यश्वा द्विरदाङ्गनाश्च[3] कथिताः प्राक्सूरिभिः सर्वतः ॥ १ ॥

हरिणीशशयोर्वृषाश्वयोः
समयोगः[4] करिणीतुरङ्गयोः ।
भवतीह परस्परं द्वयो-
र्नितरां प्रीतिरनङ्गसङ्गरे ॥ २ ॥

हरिणीवृषभं[5] तथाश्विका-
तुरगं चोच्चमिति[6] द्वयं रतम्[7] ।
तुरगीशशकं द्विपीवृषं
स्मृतमेतद्वितयं तु नीचकम् ॥ ३ ॥

कुरङ्गीहययोर्योगं[8] रतमत्युच्चकं विदुः ।
हस्तिनीशशयोश्चाथ[9] रतं स्यादतिनीचकम् ॥ ४ ॥

तत्र प्रशस्यं सुरतं समं स्या-
दुच्चद्वयं मध्यममेव विद्यात् ।
नीचे ऽधमे ऽत्युच्चमथातिनीच-
मत्यन्तनिन्द्यं[10] कविभिः प्रदिष्टम्[11] ॥ ५ ॥

क्रमयो रुधिरोद्भवास्त्रिधा
लघुमध्योरुबलाः स्मरालये ।
जनयन्ति बलानुसारतो
बहुकण्डूं वनिताजनस्य ते ॥ ६ ॥

प्रमाणहीनलिङ्गेन सा कण्डूर्नोपशाम्यति[12] ।
अतो न नीचसम्भोगे[13] तुष्टिं गच्छन्ति योषितः ॥ ७ ॥

वराङ्गमध्यं नारीणामत्यन्तं कोमलं स्मृतम्[14] ।
अतिप्रमाणलिङ्गेन नातस्तासां[15] सुखं भवेत् ॥ ८ ॥

समप्रमाणलिङ्गेन स्थूलेन सुदृढेन च ।
शमयन्मूलकण्डूतिं[16] स्पन्दयंश्च मुहुर्मुहुः ॥ ९ ॥

कामकेलिकलाभिज्ञः सुखयन्विविधैर्गुणैः[17] ।
विसृष्टकामसलिलां वशीकुर्यान्मृगीदृशम् ॥ १० ॥

नारी विसृष्टकुसुमेषुजला रतान्ते
नृत्यं करोति बहुवल्गनरोदने[18] च ।
वैकल्यमेति मुकुलीकृतचारुनेत्रा
शक्नोति नो किमपि सोढुमतिप्रयासम् ॥ ११ ॥

चिरमध्यमशीघ्रसम्भवा
नरनार्योस्तु विसृष्टिरुच्यते ।
समयस्थितिप्रभेदतो[19]
नवधैवं सुरतं समीरितम् ॥ १२ ॥

चण्डमध्यममन्दाख्यांस्त्रीन्वेगांस्तु[20] विदुस्तयोः ।
क्रिया च[21] त्रिविधा प्रोक्ता लघुमध्यचिरोदया ॥ १३ ॥

अत्रापि कालभेदेन नवधात्वं समूहयेत् ।
सप्तविंशतिसंख्या हि कीर्तितैवं रतिर्बुधैः[22] ॥ १४ ॥

प्रचण्डवेगे बहुशो विसृष्टिः
कामाकुलत्वं रतिलोलता च ।
स्यान्मन्दवेगे विपरीतमेत-
त्तन्मध्यभावः[23] खलु मध्यमेषु ॥१५॥

॥ अथ शशस्वरूपं निरूप्यते ॥

प्रायः कोमलकुन्तलाः पृथुदृशः शान्ताश्च तुच्छाशनाः[24]
सूक्ष्माङ्गाः शुचयः सुवर्तुलमुखास्तुल्याल्पदन्तास्तथा[25] ।
बिभ्राणाः[26] करजानुपादजघनग्रीवोरुषु श्यामतां
धन्याः स्वल्परताः[27] सुगन्धिमदनस्यन्दा विनीताः शशाः ॥१६॥

॥ अथ वृषभलक्षणानि ॥

क्रूराः प्रोन्नतमौलयो दृढभुजाः सुपौढवक्षःस्थलाः
रूक्षाः कूर्मनिभोदराश्च कठिनास्त्यागान्विताः पीवराः ।
शोणान्तःस्थिरदीर्घलोचनभृतः स्वारक्तहस्तोदराः[28]
व्यालोला वृषभा नवाङ्गुलमितं कामाङ्कुशं बिभ्रति[29] ॥१७॥

॥ अथाश्वलक्षणानि ॥

दीर्घस्थूलशिरोरुहाश्चलदतिस्फारेक्षणाः[30] क्रोधना
अत्यन्तं कृशदीर्घकंधररदश्रोत्राननाः[31] लोभिनः[32] ।
पीनोरःस्थलदीर्घबाहुयुगला[33] निद्रालवः सालसाः
प्रौढा वक्रनखाङ्घ्रिजानुयुगला[34] गम्भीरसंभाषिणः ॥१८॥

धृष्टाः खण्डरते रताश्च नितरां दीर्घाङ्गुलिश्रेणयः
स्थूलस्त्रीरतिलालसा बहुभुजो गत्या तु पृथ्व्यान्विताः ।
भूरिक्षारविगन्धिमन्मथजलप्रायास्तथा[35] व्याकुला
आदित्याङ्गुलसंमितं[36] च तुरगा लिङ्गं सदा बिभ्रति[37] ॥१९॥

|| अथ मृगीलक्षणानि ||

सान्द्राकुञ्चितकुन्तला समशिरास्तन्वी सुतुङ्गस्तिनी[38]
फुल्लेन्दीवरलोचनाल्पविवरघ्राणा च तुच्छोदरी[39] ।
आरक्ताधरपाणिपादयुगला पीनोरुकामालया
प्रायः कोमलचञ्चलर्जुभुजका[40] विस्तीर्णगण्डश्रुतिः[41] ॥२०॥

ईर्ष्यालुः सुकुमारिका पिकरवात्यन्तं रते लम्पटा
बिभ्रत्यम्बुजमञ्जुगन्धिमदनस्यन्दं[42] तथाल्पाशना ।
सुश्रोणी सरलाङ्गुलिर्गजगतिश्चञ्चन्मना रागिणी
ज्ञेया निम्नषडङ्गुलैः परिमितं गुह्यं वहन्ती मृगी ॥२१॥

|| अथ वडवालक्षणानि ||

मौलिं निम्नसमुन्नतं विदधती स्थूलर्जुसान्द्रैः कचै-
र्नीलाम्भोजदलेक्षणायतगलश्रोत्रानना कोमला ।
पीनश्रोणिपयोधरा शुभगतिर्गम्भीरनाभिह्रदा
किंचित्पृथ्वधरा च मांसलभुजा क्षामोदरी कोपिनी ॥२२॥

शोणाम्भोरुहचारुपाणिचरणा निद्रासुभोज्यप्रिया
विस्तीर्णां दधती कटिं चलमनाः कान्तेऽनुरागान्विता[43] ।
कामाम्भः पललप्रगन्धि[44] सुचिरात्संभोगकाले द्रवे-
द्विज्ञेया वडवा नवाङ्गुलमितं गुह्यं वहन्ती बुधैः ॥२३॥

|| अथ करिणीलक्षणानि ||

पीनघ्राणकपोलकर्णगलका[45] प्रम्थूललम्बोष्ठिका[46]
पिङ्गाक्षी दृढवक्रपर्वनिरहा[47] पृथ्वल्पनीलालका ।
ह्रस्वस्थूलकराङ्घ्रिबाहुयुगला[48] गम्भीररूक्षस्वरा[49]
कामार्ता सततं सुतीक्ष्णदशना दुष्टा च वीतत्रपा[50] ॥२४॥

दुःशीला शबलाङ्गिका पृथुकुचा कष्टैकसाध्या रता-
वत्यन्तं[51] बहुभोजना[52] च नितरां पापेषु बद्धस्पृहा ।
बिभ्रत्यैभमदोग्रगन्धमपि[53] सा कन्दर्पनीरं सदा
ज्ञेया भानुमिताङ्गुलीकमदनावासा बुधैर्हस्तिनी ॥२५॥

इति निर्दिष्टभेदानां व्यभिचारोऽपि लक्ष्यते[54] ।
श्रेष्ठमध्याधमत्वेन सांकर्याच्च विशेषतः[55] ॥२६॥

इति श्रीमल्लाडखानविनोदाय महाकविकल्याणमल्लविरचिते
ऽनङ्गरङ्गे जातिविशेषपूर्वकं सुरतभेदनिरूपणं नाम
तृतीयः स्थलः ॥ ३ ॥

# अथ चतुर्थः स्थलः ।

—:o:—

॥ अथाङ्गनानां समानधर्मा निरूप्यन्ते ॥

यावत्षोडशसंख्यमब्दमुदिता[1] बाला ततस्त्रिंशतं[2]
यावत्स्यात्तरुणीति बाणविशिखप्रख्यं[3] तु यावद्भवेत् ।
सा प्रौढेत्यभिधीयते कविवरैर्वृद्धा तदूर्ध्वं[4] स्मृता
निन्द्या कामकलाकलापविधिषु त्याज्या सदा कर्मिभिः[5] ॥ १ ॥

बाला नवीनसुरते मुदिता तमिस्रे
संजायतेऽथ तरुणी महति प्रकाशे ।
प्रौढा प्रकाशतमसोः समुपैति सौख्यं
वृद्धा तु न क्वचन जीवितहारिणी[6] सा ॥ २ ॥

बाला ताम्बूलमालाद्यैस्तरुणी भूरिभूषणैः ।
सुप्रेम्णा रज्यते[7] प्रौढा वृद्धा त्वालापगौरवैः[8] ॥ ३ ॥

कृशतनुरतिदीर्घा निम्नकक्षा च कृष्णा
सुचिरपतिवियुक्ता कामिनी स्याच्छलथाङ्गी ।
पृथुलतरशरीरा गौरवर्णा च खर्वा[10]
सततसुरतयोगा[11] व्यूढकक्षा[12] दृढा स्यात् ॥ ४ ॥

॥ अथ प्रकृतिलक्षणानि ॥

श्रेष्ठा बलाशप्रकृतिः[13] पित्तजा मध्यमा स्मृता[14] ।
अधमा वातजा नारी तल्लक्षणान्यपि वक्ष्महे[15] ॥ ५ ॥

सुस्निग्धदन्तनखलोचनपद्मयुग्मा[16]
मानोन्नता प्रियतमे सुदृढानुरागा[17] ।
श्यामाथ शीतमृदुमांसलगुह्यरन्ध्रा[18]
प्रोक्ता कफप्रकृतिरेव वरा पुरन्ध्री ॥ ६ ॥

स्यात्पित्तला तु[19] गौराङ्गी शोणलोचनपाणिजा ।
क्षणं क्रुद्धा[20] प्रसन्ना च पीनश्रोणिपयोधरा[21] ॥ ७ ॥

बिभर्ति घर्मसलिलं विस्रगन्धि सुबुद्धिका ।
श्लथकोष्णवराङ्गी[22] च कुशला सुरते मृदुः ॥ ८ ॥

वातला तु[23] कठोराङ्गी रूक्षकेशी प्रलापिनी[24] ।
चञ्चला बहुभोज्या च कृष्णपाणिजलोचना[25] ॥ ९ ॥

श्यामा धूसरवर्णा च सुरते कठिना भृशम् ।
गोजिह्वाभखरस्पर्शं बिभर्ति मदनालयम् ॥१०॥

॥ अथ देवसत्त्वादय उच्यन्ते ॥

प्रसन्नवक्राम्बुजसौरभाङ्गी
संतोषयुक्ता शुचिकर्मदक्षा[26] ।
प्रियंवदा भूरिधना जनाढ्या
नारीयमुक्ता किल देवसत्त्वा ॥११॥

संगीतलीलारसिकातिशान्ता
सुगन्धमाल्यादिरुचिः शुभाङ्गी ।
विलासिनी निर्मलचारुवेषा[27]
गन्धर्वसत्त्वा वनिता प्रदिष्टा ॥१२॥

अपेतलज्जा मधुमांससक्ता
पीनस्तनी चम्पकगौरदेहा ।
रोषान्विता[28] संततभोगवाञ्छा
प्रोक्ता कवीन्द्रैः खलु यक्षसत्त्वा ॥१३॥

आतिथ्यसख्यादिषु[29] बद्धभावा-
नुरागिणी निर्मलचित्तवृत्तिः ।
नानाव्रतैरेति[30] न च प्रयासं[31]
मनुष्यसत्त्वा परिकीर्तिता सा ॥१४॥

दुश्चारिणी कुत्सितभूरिभोज्या
हृष्टातिदुष्टा[32] परितप्तगात्री ।
खर्वातिकृष्णा[33] सविकारवक्त्रा
मालिन्ययुक्तेति[34] पिशाचसत्त्वा ॥१५॥

व्याकुला भ्रान्तिशीला च सोच्छ्वासा बहुजृम्भिका[35] ।
निद्रासक्ता[36] च सततं नागसत्त्वेति सा स्मृता ॥१६॥

उद्वेगं निष्फलं[37] कुर्यान्नेत्रे संभ्रामयेन्मुहुः[38] ।
अतिक्षुधार्ता सततं[39] काकसत्त्वेति सोच्यते[40] ॥१७॥

अत्यन्तचपला[41] या तु सततं भ्रान्तलोचना ।
दन्तसंगरसक्ता च[42] कपिसत्त्वेति तां विदुः[43] ॥१८॥

स्वभावदुष्टा[44] वाक्यानि विप्रियाण्येव भाषते[45] ।
अपेतरागा स्नानादौ[46] खरसत्त्वेति[47] सा स्मृता ॥१९॥

जातिसत्त्वादयो ये तु नारीणामत्र भाषिताः[48] ।
प्रधाना[49] प्रकृतिर्ज्ञेया तेषु सर्वेषु पण्डितैः ॥२०॥

॥ अथ स्त्रीणां नाशहेतव उच्यन्ते ॥

पितृसदननिवासः, संगतिः पुंश्चलीभिः,
प्रवसनमपि पत्युर्वार्द्धिकं, सेर्ष्यता च[50] ।
वसतिरपरपुंभिर्दुष्टशीलैरवश्यं[51]
क्षतिरपि निजवृत्तेर्योषितां[52] नाशहेतुः । ॥२१॥

॥ अथ वैराग्यहेतवः ॥

कार्पण्यादतिमानरोगविरहोद्योगादिनारुण्यतो
मालिन्यासमयज्ञतादिभयतः[53] शोकाद्दरिद्रादपि ।
भर्तॄणां तनुतादिभिश्च[54] वपुषः काठिन्यतः शङ्कना-
द्दोषाणां च वृथा प्रयान्ति[55] वनिता वैराग्यमुच्चैः सदा ॥२२॥

॥ अथ विरक्तालक्षणानि ॥

नाभिपश्यति भर्तारं नोत्तरं संप्रयच्छति[56] ।
वियोगे सुखमाप्नोति संयोगे चातिसीदति[57] । ॥२३॥

शय्यामुपगता शेते वदनं मार्ष्टि चुम्बिता ।
तन्मित्रेर्द्वेष्टि मानं च विरक्ता नाभिवाञ्छति ॥२४॥

॥ अथ प्रीतिलक्षणम् ॥

नैसर्गिकी विषयजा समा चाभ्यासिकी तथा ।
चतुर्विधेति विद्वद्भिर्दम्पत्योः प्रीतिरुच्यते ॥२५॥

अभ्यासविषयासाध्या[58] दम्पत्योः सहजा तु या[59] ।
सान्द्रा निगडभूता च[60] प्रीतिर्नैसर्गिकी मता[61] ॥२६॥

मालाचन्दनभोज्याद्यैर्विषयैर्वर्धिता तु या ।
प्रीतिर्विषयजा सोक्ता[62] समयोगे समा स्मृता ॥२७॥
आखेटदेवपूजादिकेलिसंगीतकर्मसु ।
अभ्यासयोगाद्या वृद्धिं याति साभ्यासिकी मता[63] ॥२८॥

॥ अथ भोजनादिव्यवस्था ॥

भोजनं द्विगुणं स्त्रीणां बुद्धिः कृत्ये चतुर्गुणा ।
निश्चयः षड्गुणः[64] पुंभ्यः[65] कामश्चाष्टगुणः स्मृतः[66] ॥२९॥

॥ अथ योनिस्वरूपं निरूप्यते ॥

योनिरभ्यन्तरे कापि पद्मकिञ्जल्ककोमला[67] ।
कापि स्याद्गुटिकाकीर्णा काचिद्वलिचयाकुला ॥३०॥
गोजिह्वाभखरस्पर्शा काचिदभ्यन्तरे भवेत्[68] ।
पूर्वपूर्वतरा तासु श्रेष्ठा ज्ञेया[69] विचक्षणैः ॥३१॥
योनिमध्येऽस्ति नाड्येका[70] कामाङ्कुशसमा हि या[71] ।
लिङ्गेन क्षोभिता सैव मदवारि[72] निरन्तरम् ॥३२॥
कामातपत्रात्सृजति[73] स स्यन्द इति कीर्त्यते ।
वराङ्गरन्ध्रादूर्ध्वं[74] तु नासिकाभं यदस्ति तत्[75] ॥३३॥
मन्मथच्छत्रमित्याहुराढ्यं मदशिराचयः[76] ।
योनिरन्ध्रे[77] नातिदूरात्पूर्णचन्द्रास्ति नाडिका ॥३४॥
मनोजवारिसंपूर्णा स्त्रीणां तिष्ठति सर्वदा ।
तद्विसृष्ट्या[78] द्रुता नारी प्रोच्यते पूर्वसूरिभिः ॥३५॥

॥ अथाल्पसाध्योच्यते ॥

रङ्गादिश्रान्तदेहा[79] चिरविरहवती मासमात्रप्रसूता
गर्भालस्या च नव्यज्वरयुततनुका[80] त्यक्तमानप्रसन्ना ।

स्नाता पुष्पावसाने नवरतिसमये मेघकाले वसन्ते[81]
प्रायः सम्पन्नरागा मृगशिशुनयना स्वल्पसाध्या रते स्यात् ॥३६॥

कन्दर्पयुद्धे प्रथमे ऽल्पभावा-
श्चिरेण तृप्तिं वनिता लभन्ते ।
शीघ्रं द्वितीये धृतभूरिभावाः
पुंसः[82] क्रमोऽयं विपरीत उक्तः ॥३७॥

॥ अथ रताभिलाषचिन्हानि प्रोच्यन्ते ॥

संगृह्णात्यलकान्मुहुः स्तनयुगं[83] वस्त्रेण नाच्छादये-
द्दन्तेनाप्यधरं दशेच्च विरमेत्सन्जातलज्जा क्षणम् ।
प्रायश्चुम्बति बालकं निजवपुः संभज्जते जृम्भते
रथ्यां चापि रुणद्धि पश्यति च दोर्मूलं हसत्यादरात् ॥३८॥

आलिङ्गेत्स्वसखीं प्रियं प्रलपति[84] प्रत्युत्तरं याचते[85]
ह्यव्यक्तं[86] न च भाषते स्मितमुखी व्रीडां वृथा धारयेत् ।
व्याजेनैव विलम्बते प्रकुरुते[87] मौलौ[88] च कण्डूयनं
नारीणां सुरतस्पृहा[89] बुधजनैर्ज्ञेयेति भावैः सदा ॥३९॥

इति श्रीलाडखानविनोदाय महाकवि कल्याणमल्लविरचिते
ऽनङ्गरङ्गे सामान्यधर्मनिरूपणं नाम
चतुर्थः स्थलः ॥ ४ ॥

—*—

# अथ पञ्चमः स्थलः ।

॥ अथ वनितानां देशधर्मा उच्यन्ते ॥

विचित्रवेषा शुचिकर्मदक्षा
सुशीलिनी दन्तनखादिरक्ता ।
मनोजसंग्रामविनोदरङ्गा[1]
स्यान्मध्यदेशप्रभवा[2] पुरन्ध्री ॥ १ ॥

उपभोगकलानुरागिणी
चिरसम्भोगरसप्रतोषिणी[3] ।
करघातनतुष्टमानसा
वनिता मालवदेशसम्भवा ॥ २ ॥

अभिघातरुचिर्विरज्यते
नखदन्तैः परिरम्भलालसा[4] ।
बहुचुम्बनहार्यमानसा[5]
वनिताभीरसमुद्भवा स्मृता ॥ ३ ॥

परिरम्भणलोलुपा रद-
क्षतघातैर्द्रवमेति[6] सत्वरम् ।
सुकुमारतनुर्मनोरमा
सुरते नृत्यति लाटकामिनी। ॥ ४ ॥

मृद्वी दुराचाररता वहन्ती[7]
रतार्तिमुच्चैरपि नर्मदक्षा[8] ।

त्रपाविहीनातिमनोरमाङ्गी
स्यादान्ध्रकर्णाटभवा[9] पुरन्ध्री ॥ ५ ॥

नितान्तकण्डूतियुतस्मरालया[10]
द्रवन्ति चण्डध्वजघातनाच्चिरम्[11] ।
रतिप्रयोगे[12] चतराश्च योषितः
प्रकीर्तिताः कोसलराष्ट्रसम्भवाः[13] ॥ ६ ॥

ईषद्धासमनोरमाश्च नितरां साक्षेपवाग्विभ्रमा
निर्लज्जाश्चपलाः कलासु कुशला गाढानुरागान्विताः ।
नार्यः पाटलिपुत्रजा अपि महाराष्ट्रोद्भवाः[14] संततं
नानावेषविनोदभावरसिकाः सङ्कीर्तिताः पण्डितैः ॥ ७ ॥

कुसुममृदुशरीरा चुम्बनालिङ्गनादौ
बहुतरधृतभावा[15] क्रूरचेष्टा विरक्ता[16] ।
विषमविशिखयुद्धे स्तोकवेगा पुरन्ध्री
भवति तरलनेत्रा[17] वङ्गजा गौडजा[18] च ॥ ८ ॥

विपरीतरताभिलाषिणी
गतलज्जा नखदानतोषिणी[19] ।
नितरामनुरागशालिनी
मदनार्ता कथितैव मुत्कली[20] ॥ ९ ॥

प्रियंवदा कोमलदेहवल्ली
भृशं द्रवन्ती स्मरकेलिरङ्गे[21] ।
विलासदक्षा प्रचुरानुरागा
स्यात्कामरूपप्रभवा पुरन्ध्री ॥ १० ॥

निजदोषनिगूहने[22] रताः
परदोषग्रहणेषु तत्पराः ।

वनिता वनवाससम्भवा
दृढदेहाः परिकीर्तिता बुधैः ॥११॥

उपभोगरता सुलोचना
लघुसम्भोगविधिप्रतोषिणी[23] ।
शुभवेषधरा विचक्षणा
कथिता सा[24] खलु गुर्जरी बुधैः ॥१२॥

प्रचण्डवेगा अतिकष्टसाध्याः
सुकोपनत्यश्चलनेत्रपाताः[25] ।
भवन्ति दुष्टाः किल[26] सिन्धुजाता-
अवन्तिबाह्लीकभवाश्च नार्यः[27] ॥१३॥

नानोपभोगरसिका रतिरङ्गदक्षा
प्रोत्फुल्लपद्मनयना[28] प्रियबद्धरागा ।
कन्दर्पदर्पपरिदीपनभावशीला[29]
ज्ञेया बुधैर्मृदुगतिः[30] खलु तीरभुक्ता[31] ॥१४॥

सम्भोगशिक्षाकुशलाः सलज्जाः
प्रियोपभोगा अतिचण्डवेगाः ।
मनोरमाः पुष्पपुरप्रसूताः[32]
स्युरङ्गजा मद्रतिलङ्गजाश्च[33] ॥१५॥

मृद्व्यः सुवाचो लघुभोगसाध्याः
ससाहसा[34] वीतभयत्रपाश्च ।
समानरूपा द्रविडे प्रजाताः[35]
सौवीरभेदे[36] मलये च नार्यः ॥१६॥

नखादिविन्यासकलाविहीनाः[37]
सम्भोगसंमर्दनजाततोषाः[38] ।

स्वभावतो दुष्टतमाः[39] प्रचण्डाः
काम्बोजपौण्ड्रप्रभवाः[40] पुरन्ध्रयः[41] ॥१७॥

दुर्गन्धिगात्रा लघुभोगतुष्टाः
संचुम्बनाश्लेषणभावहीनाः[42] ।
म्लेच्छाङ्गनाः पर्वतजाश्च नार्यो
गाध्याश्च[43] काश्मीरभवास्तथैव[44] ॥१८॥

जात्यादिसात्म्यमिति तत्त्वत एव[45] यस्तु
ज्ञात्वा नरः सकलकामकलाप्रवीणः ।
सन्तोषयेच्च[46] सततं सुरतप्रयोगे[47]
प्राणैः समत्वमुपयाति स[48] कामिनीनाम् ॥१९॥

इति श्रीमल्लाडखानविनोदाय महाकविकल्याणमल्ल विरचिते
ऽनङ्गरङ्गे जात्यादिधर्मनिरूपणं नाम
पञ्चमः स्थलः ॥ ५ ॥

—— * ——

## अथ षष्ठः स्थलः ।

——:o:——

॥ अथ द्रावणादियोगा निरूप्यन्ते ॥

प्रागेव पुंसः सुरते न याव-
न्नारी द्रवेद्भोगफलं न तावत् ।
अतो बुधैः कामकलाप्रवीणैः[1]
कार्यः प्रयत्नो वनिताद्रवत्वे ॥ १ ॥

जात्यादिसात्म्यं[2] दुर्ज्ञेयं[3] साङ्कर्यादिविशेषतः ।
अत एवातिसौक्ष्म्याच्च कलापीन्दोरगोचरा[4] ॥ २ ॥

तस्माल्लोकहितार्थाय दम्पत्योः सुखसिद्धये ।
नानौषधविधानेन द्रवयुक्तिरुदीर्यते ॥ ३ ॥

मधुना सहितं घोषाचूर्णं[5] यस्या वराङ्गके ।
निक्षिप्यते नताङ्गी सा पुंसः प्राग्द्रवतां व्रजेत्[6] ॥ ४ ॥

शुद्धं शङ्करबीजं च जातीरसविमर्दितम्[7] ।
वराङ्गमध्ये निक्षिप्तं नारीं सन्द्रावयेद्द्रुतम्[8] ॥ ५ ॥

चिञ्चाफलं ससिन्दूरं[9] माक्षिकेण समन्वितम् ।
क्षिप्तं गुह्यान्तरे योषां[10] प्रागेव द्रवतां नयेत् ॥ ६ ॥

कर्पूरं टङ्कणं शम्भुबीजं चेति[11] त्रिभिः समैः ।
सक्षौद्रैर्लिप्तलिङ्गस्तु[12] नरः सन्द्रावयेत्प्रियाम्[13] ॥ ७ ॥

मध्वाज्यागस्त्यपत्रोत्थ रससंमर्दितेन च[14] ।
टङ्कणेन ध्वजं लिप्त्वा द्रावयेद्बलां नरः[15] ॥ ८ ॥

जीर्णो गुडश्चिञ्चिणिकाफलं च
घोषारज[16] क्षौद्रयुतं समांशम् ।
एभिर्ध्वजं यः परिलिप्य शेते[17]
कुर्यात्स[18] रेतश्च्युतिमङ्गनानाम् ॥ ९ ॥

मरिचकनकबीजैः पिप्पलीलोध्रयुक्त[19]-
र्विमलमधुविमिश्रैर्मानवो लिप्तलिङ्गः ।
स्मरसमरविलासे कष्टसाध्यां च नारी[20]-
मपगतरतरागां[21] संविदध्याद्वश्यम्[22] ॥१०॥

॥ अथ स्तम्भनविधिः ॥

पतनान्मदनाम्भसो द्रुतं[23]
परितोषो न भवेद्विलासिनाम्[24] ।

सुरतोत्सवसिद्धिहेतवे
तदयं स्तम्भविधिर्निरूप्यते ॥११॥

लज्जालुमूलं[25] गोक्षीरैर्वज्रीक्षीरेण वा पुनः ।
पिष्ट्वा स्वपादौ संलिप्य चिराद्बीजं[26] न मुञ्चति[27] ॥१२॥

अथ कौसुम्भतैलेन वर्षाभूरजसापि वा ।
लिप्तपादः पुमान्नेतो न जहाति रते द्रुतम्[28] ॥१३॥

सितायाः काकजङ्घाया मूलं[29] श्वेताब्जकेसरम्[30] ।
क्षौद्रेण नाभिसंलेपाद्बीजं स्तभ्नाति[31] कामिनः ॥१४॥

शम्याकं[32] शम्भुबीजं च कर्पूरं[33] च[34] समांशकम् ।
मधुना लेपयेन्नाभौ[35] यः स बीजं[36] न मुञ्चति ॥१५॥

सितकोकिलवृक्षस्य[37] बीजं पुष्योद्धृतं कटौ ।
बद्धं लोहितसूत्रेण बीजस्तम्भं करोत्यलम्[38] ॥१६॥

सप्तपर्णस्य बीजं वा[39] रविवारे समुद्धृतम् ।
वक्त्रे धृतं नृणां बीजं स्तभ्नाति सुरते चिरम् ॥१७॥

श्वेतेषुपुङ्खामूलं[40] वा पुष्यार्के प्राप्य यः कटौ ।
कन्याकर्तितसूत्रेण बध्नाति स[41] भजेच्चिरम् ॥१८॥

बीजं सितपिकाख्यस्य वटक्षीरेण पेषितम् ।
करञ्जबीजमध्यस्थं स्तम्भयेद्वदने[42] धृतम् ॥१९॥

॥ अथ वाजीकरणविधिः ॥

शक्तेरभावात्स्तम्भादि[43] सर्वमेवाप्रयोजकम् ।
अतः[44] शरीरपुष्ट्यर्थं वाजीकरणमुच्यते ॥२०॥

चूर्णं विदार्याः स्वरसैर्भावितं भानुशोषितम् ।
मध्वाज्यमिश्रितं लीढ्वा[45] भजते वनिता दश ॥२१॥

स्वरसैर्भावितं[46] धात्रीचूर्णमाज्यसितान्वितम् ।
क्षौद्रेण विलिहन्रात्रौ[47] वृद्धोऽपि तरुणायते ॥२२॥

कपिगोक्षुरगोरक्षबलानागबलाभवम्[48] ।
चूर्णं च शतपत्रायाः[49] पीतं क्षीरेण[50] पौष्टिकम् ॥२३॥

सितासाधितगोक्षीरे[51] माषान्सम्भाव्य शोषयेत् ।
भानुपादैः पुनस्तेषां चूर्णस्य वटकं शुभम्[52] ॥२४॥

कृत्वा घृतेन संसाध्य प्रदोषे भक्षयेत्सदा ।
वृद्धोऽपि प्रबलो[53] भूत्वा वनितानां शतं व्रजेत्[54] ॥२५॥

मध्वाह्वचूर्णकर्षं[55] वा लीढ्वा[56] मध्वाज्यमिश्रितम् ।
पिबेत्तदनु गोक्षीरं यः स नारीशतं भजेत्[57] ॥२६॥

बीजं सितपिकाक्षस्य[58] तण्डुलाः षष्टिकोद्भवाः[59] ।
द्वयोः कर्षं लिहन्रात्रौ मधुना दृढतां व्रजेत् ॥२७॥

शतपत्रारसं[60] सर्पिः तुल्यं तद्दशधा पयः[61] ।
दत्त्वा संसाधितं क्षौद्रसिताभ्यां पौष्टिकं परम्[62] ॥२८॥

मृतायस्त्रिफलायष्टीचूर्णं[63] मधुघृतान्वितम् ।
दिनान्ते लेढि यो नित्यं[64] स नारीं सुरते जयेत् ॥२९॥

॥ अथ लिङ्गस्थूलीकरणम् ॥

लघु सूक्ष्मेण लिङ्गेन नैव तुष्यन्ति योषितः ।
अतस्तत्प्रीतये[65] वक्ष्ये स्थूलीकरणमुत्तमम् ॥३०॥

बला नागबला कुष्ठं वचा द्विरदपिप्पली ।
वाजिगन्धा हयरिपुरिति[66] सर्वं समांशकम् ॥३१॥

संचूर्ण्य[67] नवनीतेन लिङ्गलेपो विधीयते[68] ।
मुहूर्तादतिसूक्ष्मं च[69] वाजिलिङ्गसमं भवेत् ॥३२॥

मातीरसशिलाकुष्ठत्योषटङ्कणचूर्णकैः ।
तिलतैलयुतैर्लेपाल्लिङ्गवृद्धिः प्रजायते[70] ॥३३॥

सैन्धवं मरिचं कुष्ठं बृहती खरमञ्जरी ।
हयगन्धा यवा माषाः पिप्पली गौरसर्षपाः ॥३४॥

तिलतैलेन संपिष्य मधुरोद्वर्तनं बुधः[71] ।
प्रयोजयेत्कर्णपालीस्तनलिङ्गविवर्धनम्[72] ॥३५॥

भल्लातं कृष्णलवणं[73] नलिनीदलमेव च ।
दग्ध्वा तद्भस्म बृहतीफलजेनाम्भसा सह ॥३६॥

महिषीगोमयैः पूर्वं घृष्टलिङ्गे[74] विलेपयेत्[75] ।
तत्क्षणान्मुसलाकारं दृढं चैव भवेदलम्[76] ॥३७॥

लोध्रकासीसमातङ्गबलाकल्कैस्तिलोद्भवम्[77] ।
तैलं संसाधितं लिङ्गयोनिकर्णविवर्धनम्[78] ॥३८॥

॥ अथ योनिसंकोचनविधिः ॥

प्रौढानवप्रसूतानां[79] श्लथं[80] गुह्यं न रोचते ।
यूनामतस्तत्संकोचविधिं संक्षेपतो ब्रुवे[81] ॥३९॥

सनालं कमलं[82] पिष्ट्वा पयसा कारयेद्वटीम् ।
तां निधाय[83] क्षणं योनौ वृद्धापि स्यात्कुमारिका ॥४०॥

देवदारुनिशायुग्मसरसीरुहकेसरैः[84] ।
संलिप्तं मदनच्छत्रं संकोचं परमं व्रजेत्[85] ॥४१॥

लिप्त्वा पिकाक्षबीजैश्च[86] वारिपिष्टैः स्मरालयम् ।
नियमेन परं गाढं वराङ्गं लभतेऽङ्गना ॥४२॥

त्रिफलाधातकीपुष्पजम्बुत्वक्सारवैः समैः ।
सक्षौद्रैर्लिप्तगुह्या[88] च कन्येव जरती[89] भवेत् ॥४३॥

कटुतुम्बीभवैर्बीजैः सलोध्रैः स्मरमन्दिरम् ।
लिप्त्वा नवप्रसूतापि[90] ध्रुवं कन्येव जायते ॥४४॥

वाजिगन्धावचाव्योषनिशेन्दीवरकुष्ठकैः[91] ।
तोयपिष्टैः स्मरागारं लिप्तं गाढतरं[92] भवेत् ॥४५॥
मधूककाष्ठसारेण[93] श्लक्ष्णेन[94] मधुना सह ।
वराङ्गं पूरितं यत्नादत्यन्तं दृढतां व्रजेत्[95] ॥४६॥

॥ अथ योनिसंस्कारः ॥

लघुघ्नौ[96] सार्षपं तैलं जातिपुष्पैः प्रसाधयेत् ।
नारीगुह्यं तदभ्यङ्गात्सुगन्धि सुरते भवेत्[97] ॥४७॥
सुरदारुतिलारिष्टदाडिमाञ्जनकाञ्चनैः[98] ।
तैलं सुसिद्धमभ्यङ्गाद्योनिं सुरभितां नयेत्[99] ॥४८॥

॥ अथ लोमशातनम् ॥

कटुतैले नागचूर्णं क्षिप्त्वा सप्ताहमातपे ।
निधेयं मर्दनात्तत्तु योनिलोमापहारकम्[100] ॥४९॥
सप्ताहं[101] भावितं शङ्खभस्म रम्भाम्भसा ततः[102] ।
तालेन युक्तं हरति योनिलोमानि योषिताम्[103] ॥५०॥
हरितालं पलाशस्य भस्म रम्भाजलान्वितम् ।
एतस्य लेपाल्लोमानि[104] न रोहन्ति कदाचन ॥५१॥

॥ अथ नष्टपुष्पसमुद्भवविधिः ॥

भृष्टं[105] ज्योतिष्मतीपत्रं जपापुष्पं[106] च वारिणा ।
पिष्ट्वा पिबति सा भूयो नष्टपुष्पं प्रविन्दति[107] ॥५२॥
तण्डुला देवकाष्ठं च दूर्वापत्रं समं त्रयम्[108] ।
वारिपिष्टं[109] पिबेद्या च[110] नष्टपुष्पं[111] लभेत सा[112] ॥५३॥

॥ अथ पुष्पाधिक्यनिवारणम् ॥

पथ्या रसाञ्जनं धात्री त्रयं पिष्ट्वाम्भसा[113] समम् ।
पिबेद्यात्यधिकं[114] पुष्पं सप्ताहात्परिनाशयेत्[115] ॥५४॥

कपित्थं वेणुपत्रं च समांशं मधुना सह ।
लीढं सप्ताहमात्रिक्यं[116] पुष्पस्योपशमं नयेत् ॥५५॥

॥ अथ गर्भाधानविधिः ॥

रुक्मकाञ्चनताम्राणां भस्म क्षौद्रान्वितं त्र्यहात्[117] ।
लीढं पुष्पान्तके[118] स्त्रीभिः क्षेत्रशुद्धिं परां दिशेत् ॥५६॥
नागकेसरचूर्णं वा[119] स्नाताज्येन पिबेत्र्यहम्[120] ।
क्षीरभुग्भर्तृसंसर्गाद्गर्भं[121] धत्तेऽङ्गना ध्रुवम् ॥५७॥
वाजिगन्धामृतासर्जिक्वाथं[122] स्नानदिने पिबेत् ।
सापि पुंयोगतो नारी गर्भं धत्ते न संशयः ॥५८॥
शृङ्गवेरोषणक्षुद्राकणाकेसरजं[123] रजः ।
गोघृतेन पिबेद्या तु वन्ध्यापि लभते सुतम् ॥५९॥
पुष्योद्धृतं लक्ष्मणाजं[124] मूलं भर्त्राभिपेषितम्[125] ।
पिबेद्घृतेन[126] सा गर्भं धत्ते क्षीराशनाद्ध्रुवम्[127] ॥६०॥
बीजपूरस्य मूलं वा क्षीरसिद्धं[128] घृतान्वितम् ।
ऋतौ[129] त्र्यहं पिबेद्या सा गर्भं धत्ते न संशयः[130] ॥६१॥
पुष्योद्धृतं[131] श्वेतबलामूलं कर्षं च तत्समम् ।
यष्टीचूर्णं[132] सितायास्तु पलमेकं विमिश्रयेत् ॥६२॥
पिष्ट्वा गोरेकवर्णायाः सवत्सायास्तथा पयः[133] ।
आदाय क्षिप्त्वा तन्मध्ये पिबेत्स्नाता वराङ्गना ॥६३॥
न खादेत्तद्दिने किञ्चिदथ रात्रौ पतिं व्रजेत्[134] ।
प्रातः[135] क्षीरौदनं भक्षेद्गर्भिणी[136] स्यादसंशयम् ॥६४॥

॥ अथ गर्भस्तम्भनविधिः ॥

कुलालपाणिसंलग्नः पङ्कः क्षौद्रसमन्वितः[137] ।
अजाक्षीरेण सम्पीतो[138] गर्भस्तम्भं करोत्यलम् ॥६५॥

यष्टीसावरधात्रीणां[139] चूर्णं[140] पीतं पयोन्वितम् ।
सप्ताहाच्चलितं गर्भं स्त्रीणां संस्तम्भयेद्ध्रुवम्[141] ॥६६॥
कन्दं लोहितपद्मस्य[142] क्षीराज्यमधुसंयुतम् ।
सुपक्वं शीतलं कृत्वा सप्ताहं याङ्गना[143] पिबेत् ॥६७॥
गर्भस्रावं तथा वान्ति[144] शूलं शोथं[145] त्रिदोषजम् ।
अन्यांश्च बहुशो[146] रोगान्नाशयेन्नात्र संशयः ॥६८॥

॥ अथ सुखप्रसवविधिः ॥

मातुलङ्गमधूकोत्थं[147] चूर्णं मधुघृतान्वितम् ।
पीत्वा सूते सुखं नारी[148] शीघ्रमेव न संशयः ॥६९॥
गृहधूमं समादाय पिबेत्पर्युषिताम्भसा ।
या सा सूते सुखेनैव शीघ्रमेव वराङ्गना ॥७०॥
रविवारे गृहीतस्य गुञ्जामूलस्य बन्धनात् ।
नीलसूत्रैः कटौ मूर्ध्नि जायते प्रसवो द्रुतम्[150] ॥७१॥
ओं मन्मथ मथ मथ[151] वाहिलि बालस्योदरं[152] मुञ्च मुञ्च लघु स्वाहा ॥
इति मन्त्रेण संजप्तं पातुं देयं जलं बुधैः ।
सूते ऽङ्गना सुखं शीघ्रं मन्त्रराजप्रसादतः ॥७२॥

॥ अथ वन्ध्यात्वापादनम् ॥

गुडं त्रैहायनं यात्ति[153] पलमात्रं तु नित्यशः ।
मासार्धं सा[154] भवेद्वन्ध्या यावदायुर्न संशयः ॥७३॥
तुषतोयेन संक्वाथ्य मूलमग्नितरूद्भवम्[155] ।
पुष्पावसाने त्रिदिनं पीत्वा वन्ध्याभिजायते[156] ॥७४॥
कदम्बस्य[157] फलं पादं मक्षिकाया[158] दिनत्रयम् ।
पीतमुष्णोदकेनैतद्वन्ध्यात्वं[159] प्रतिपादयेत ॥७५॥
रक्षोभरुहबीजानां[160] पलार्धं तण्डुलाम्भसा ।
ऋतौ पीतं[161] तु सप्ताहं वन्ध्यां कुर्यान्मृगीदृशम्[162] ॥७६॥

॥ अथ केशोद्भवरञ्जनविधिः ॥

गव्येन पयसा पिष्टं[163] तिलपुष्पं सगोक्षुरम्[164] ।
सप्ताहलेपनात्कुर्यात्केशान्दीर्घान्बहूनपि ॥७७॥

दन्तीसावरकल्केन सिद्धं तैलं[165] तिलोद्भवम् ।
पीतं[166] कार्श्यं च खर्वत्वं केशानां हन्ति लेपनात्[167] ॥७८॥

गुञ्जाफलरजः क्षौद्रयुक्तं लेपान्निहन्त्यलम्[168] ।
इन्द्रलुप्तं तथा केशबाह्यारोहणकारणम्[169] ॥७९॥

दग्धेभदन्तं[170] सुश्लक्ष्णं पिष्ट्वा तेन प्रलेपयेत्[171] ।
इन्द्रलुप्तं क्षयं याति केशा रोहति भूरिशः[172] ॥८०॥

आम्रप्रसूनं त्रिफला त्वक्पाण्डवतरोरपि ।
पिण्डारकं चेति[173] कल्कैस्तिलतैलं प्रसाधयेत् ॥८१॥

नीलतैलमिति[174] ख्यातं केशसंरञ्जनं[175] परम् ।
क्षिप्तोऽत्र हंसपक्षोऽपि ध्रुवं मेचकतां व्रजेत्[176] ॥८२॥

माजूफलकणानीलीसैन्धवैः[177] आरनालकैः[178] ।
पिष्टैः[179] शिरोरुहा लिप्ताः श्यामवर्णा भवन्त्यलम्[180] ॥८३॥

निम्बतैलं पलं[181] नित्यं मासिकं यः पिबेन्नरः ।
शुक्लाः केशाः क्रमेणैव नस्य यान्त्यलितुल्यताम् ॥८४॥

गोरोचना[182] कृष्णातिलाः काकमाची शतावरी ।
अमीभिश्चिकुरा लिप्ताः श्यामतां यान्ति सत्वरम् ॥८५॥

॥ अथ केशश्वेतीकरणम् ॥

तिलानां स्नुहिदुग्धेन भावितानां तु यद्भवेत् ।
तैलं तल्लेपनात्केशाः स्फटिकाभा भवन्ति हि ॥८६॥

वज्रीक्षीरेण या धात्री[183] भाविता मज्जनात्तया[184] ।
तत्क्षणादेव[185] मर्त्यानां निपतन्ति स्वयं कचाः ॥८७॥

॥ अथ मुखकण्टकहरणम् ॥

वचासावरधान्यानां लेपनाद्यौवनोद्भवाः[186] ।
मुखस्थाः[187] पिटका यान्ति नरनार्योः क्षयं त्र्यहात्[188] ॥
कण्टकैः शाल्मलीयैश्च क्षीरपिष्टैर्विलेपयेत्[189] ।
मुखं तस्यापि पिटका[190] नाशं गच्छन्त्यसंशयम् ॥८९॥
लोध्रसैन्धवसिद्धार्थवचानां परिलेपनात् ।
गण्डस्थाः पिटका यान्ति देहिनां संक्षयं क्रमात्[191] ॥९०॥

॥ अथ मुखनीलीहरणम् ॥

तिलद्विजीरसिद्धार्थान्पिष्ट्वा क्षीरेण[192] लेपयेत् ।
यः सप्ताहं जयेन्नीलीं चन्द्रवद्वदनं भवेत् ॥९१॥
गैरिकं शोणयष्टी[193] च मेघनादा[194] निशाद्वयम् ।
पिष्ट्वा रम्भाम्भसा लेपात्सप्ताहं[195] नीलिकां जयेत् ॥९२॥

॥ अथ कुचसंस्कारः ॥

वाजिगन्धावचाकुष्ठकणाश्वारिलवङ्गकम्[196] ।
नवनीताम्बुसंमिश्रं[197] लेपात्कुर्यात्कुचान्पृथून्[198] ॥९३॥
कोलमज्जा हयारिश्च भुजगस्य वसा समा ।
एतेषां मर्दनात्स्त्रीणां कुचाः[199] संयान्ति पीनताम् ॥९४॥
श्रीपर्णीरससंसिद्धतिलतैलविलेपनात्[200] ।
पतितावपि संकुर्यात्पीनोत्तुङ्गौ[201] कुचौ स्त्रियाः ॥९५॥
दाडिमीकल्कसंसिद्धकटुतैलविमर्दनम्[202] ।
स्तनौ चारुतरौ पीनौ नित्यं कुर्यान्मृगीदृशः[203] ॥९६॥
तैलं तिलोद्भवं[204] गव्यं घृतं चार्कपयः समम् ।
बला श्यामलता व्योषं लज्जालुश्च[205] निशाद्वयम् ॥९७॥
एतेषां कल्कसहितं पचेन्मृद्वग्निना[206] सुधीः ।
तल्लेपेन[207] कुचाः स्त्रीणां शीघ्रं यान्ति विशालताम् ॥९८॥

बाला[208] तण्डुलतोयेन तैलमेतत्पिबेद्यदि ।
पीनोत्तुङ्गौ[209] कुचौ तस्या न पतेतां[210] कदाचन ॥९९॥

इति श्रीलाडखानविनोदाय महाकवि कल्याणमल्लविरचिते
ऽनङ्गरङ्गे द्रावणादिनिरूपणं नाम
षष्ठः स्थलः ॥ ६ ॥

---*---

# अथ सप्तमः स्थलः ।

---:o:---

॥ अथ वशीकरणादिकं निरूप्यते ॥

सारमुद्धृत्य संक्षेपाद्वशीकरणमोहनम् ।
कामिनां प्रीतिजननं[1] किंचिदत्र निगद्यते ॥ १ ॥

॥ तत्रादौ तिलकविधिः ॥

लज्जालुर्मधुकं द्रव्यं[2] नलिनीमूलमेव च ।
एतत्पिष्ट्वा[3] स्ववीर्येण यः कुर्यात्तिलकं पुमान्[4] ॥ २ ॥
तत्क्षणादेव नयति[5] वशतां भुवनत्रयम् ।
वात्स्यायनेन मुनिना प्रोक्तो योगो ऽयमुत्तमः[6] ॥ ३ ॥
सितार्कमूलं[7] मञ्जिष्ठा वचा मुस्तं सकुष्ठकम्[8] ।
स्त्रीयोनिशोणितेनैतदेकीकृत्य ललाटके ॥ ४ ॥
शुभं तिलकमाधत्ते यः स लोकत्रयं क्षणात् ।
नयति स्ववशं प्राज्ञः सुचिरं मोदते भुवि[9] ॥ ५ ॥
तगरं पिप्पलीमूलं मेषशृङ्गी कणा जटा ।
एतत्समं स्वपञ्चाङ्गमलैर्नीत्वैकतां[10] सुधीः ॥ ६ ॥
मधुना तिलकं कुर्याद्यः[11] क्षोणीसुतवासरे ।
जगत्सर्वं[12] वशीकुर्यात्स पुमान्नात्र संशयः ॥ ७ ॥

गोरोचनं च सम्भाव्य स्वपुष्परुधिरेण या ।
कुर्यात्तत्तिलकं[13] भाले सा पतिं मोहयेद्ध्रुवम् ॥ ८ ॥

॥ अथाञ्जनविधिः ॥

महाष्टमीदिने यत्तु[14] श्मशाने नरमस्तके ।
पातितं[15] कज्जलं[16] विश्वं मोहयेन्नयनाञ्जनात्[17] ॥ ९ ॥

रोचना केसरं कन्या शिला चैभिर्विलोचने ।
योजयेद्दृष्टिपथगं[18] सर्वमेव विमोहयेत् ॥१०॥

तालीसकुष्ठतगरैर्लिप्त्वा[19] क्षौमीं[20] सुवर्तिकाम् ।
सिद्धार्थतैले निक्षिप्य कज्जलं नरमस्तके ॥११॥

पातयेदञ्जनात्तस्य[21] सर्वदा भुवनत्रये ।
दृष्टिगोचरमायातः सर्वो भवति दासवत् ॥१२॥

शिलाकिञ्जल्कफलिनीरोचनानां तथाञ्जनम्[22] ।
पुष्यार्कयोगे विहितं दम्पत्योर्मोहनं परम् ॥१३॥

॥ अथ चूर्णविधिः ॥

काकजङ्घा सिता पक्षौ भ्रामरौ कुष्ठमुत्पलम्[23] ।
मूलं तगरजं चैषां[24] चूर्णं क्षिप्तं[25] विमोहयेत् ॥१४॥

वात्यान्तिकदलं[26] पुंसो मलं माला शवस्य च[27] ।
पक्षावलेरिदं[28] चूर्णं क्षिप्तं शिरसि[29] मोहनम् ॥१५॥

सप्तच्छदं शिवाक्षं[30] च सक्षौद्रं तु[31] समांशकम् ।
अमीषां शिरसि क्षिप्तं चूर्णं मोहकरं परम्[32] ॥१६॥

॥ अथ भक्षणविधिः ॥

अन्त्रादि सर्वं[33] निष्कास्य खञ्जरीटोदरं कुजे[34] ।
पूरयित्वा स्ववीर्येण[35] शरावयुगले क्षिपेत् ॥१७॥

मुद्रां कृत्वा तदेकान्ते[38] सप्ताहं धारयेत्सुधीः ।
पश्चान्निष्कास्य संपिष्य[39] वर्टी[40] कृत्वा विशोषयेत् ॥१८॥
सा भक्षणविधानेन दीयमाना परस्परम् ।
दम्पत्योर्मोहजननी कीर्तिता वटिकोत्तमा ॥१९॥

॥ अथ लेपनविधिः ॥

यः स्वरेतः समादाय रतान्ते सव्यपाणिना ।
वामपादे[41] स्त्रियो लिम्पेत्सा तस्य वशगा भवेत् ॥२०॥
या भोगशेषे कान्तस्य लिङ्गं वामाङ्घ्रिणा स्पृशेत् ।
यावदायुर्भवेद्दासः स तस्या[42] नात्र संशयः ॥२१॥
कपोतविष्ठासिन्दूरमधुकैः[43] समभागकैः[44] ।
लिप्त्वा लिङ्गं भजेद्यां सा वशगा स्याद्वराङ्गना ॥२२॥
घनसारं सभल्लूकमेदं[45] च मधुना सह ।
पिष्ट्वा लिप्तध्वजो यां च भजेत्सा वशगा भवेत्[46] ॥२३॥
रोचना कनकं शम्भुबीजं कर्पूरचन्दने[47] ।
एभिर्विलिप्तलिङ्गो यां भजते सा वशीभवेत् ॥२४॥

॥ अथ धूपः ॥

चन्दनं कुङ्कुमं व्याधिं[49] कालाङ्गं कुसुमं जलम्[50] ।
देवदारुं[51] च संपिष्य मधुना सह मिश्रयेत् ॥२५॥
चिन्तामणिरिति ख्यातो धूपः परममोहनः ।
एष प्रयुक्तो विधिना सर्वकार्याणि साधयेत् ॥२६॥
एला सर्जरसस्तार्क्ष्यं चन्दनं युवती वचा ।
भृङ्गी चैभिः[53] समैर्धूपात्सर्वं विश्वं[54] विमोहयेत् ॥२७॥

॥ अथ कामेश्वरमन्त्रः ॥

क्लीं[55] प्राक्कामेश्वरेत्युक्त्वा प्रणवादि ततोऽमुकीम् ।
आनयाथानयेत्येवं[56] वशतां क्लीं ततः परम्[57] ॥२८॥

अयं कामेश्वरो मन्त्रः कदम्बकुसुमैः सह ।
पलाशकुसुमैर्वाथ[58] संजप्तो ऽयुतसंख्यकः[59] ॥२९॥
तथा[60] दशांशहोमेन सर्वसिद्धिप्रदः[61] स्मृतः ।
अनेन जप्तं[62] पुष्पादि दत्तं परममोहनम्[63] ॥३०॥

॥ अथ चामुण्डामन्त्रः ॥

ॐ चामुण्डे मोहयाथ वशतां[64] नय चामुकीम् ।
स्वाहापदान्त इत्युक्तश्चामुण्डामन्त्र उत्तमः ॥३१॥
पलाशकुसुमैरेतल्लक्षं जप्त्वा दशांशतः ।
होमेन वामविधिना सर्वसिद्धिं प्रविन्दति[65] ॥३२॥
इति मन्त्रेण जप्तानि सप्तधा कुसुमानि च ।
दत्तानि वशगां कुर्युः कामिनीं नात्र[66] संशयः ॥३३॥

॥ अथ पद्मिनीवशीकरणम् ॥

कामेश्वरपदं पूर्वमोंकाराद्यथ[67] मोहय ।
स्वाहान्तं क्रमतो मन्त्रं नागवल्लीदले लिखेत् ॥३४॥
पुष्पेन मधुयुक्तेन रविवारे ऽभिमन्त्रितम्[68] ।
शतधा दीयमानं तत्पद्मिनीं वशतां नयेत् ॥३५॥

॥ अथ चि[illegible] ॥

ओङ्कारद्वितयं प्रोक्तं[69] विहङ्गमपदद्वयम् ।
कामदेवाय तस्मै च स्वाहेत्यस्त्रं मनोभुवः[70] ॥३६॥
पिष्ट्वा जातीफलं[71] रम्भमूलतोयेन भावयेत् ।
संशोष्य भानुकिरणैर्नागवल्लीदले[72] क्षिपेत् ॥३७॥
निमन्त्र्यानेन मन्त्रेण रविवारे प्रदापयेत् ।
एतद्भक्षणमात्रेण चित्रिणी वशगा भवेत्[73] ॥३८॥

॥ अथ शङ्खिनीवशीकरणम् ॥

ॐ मोहनश्चोमिति च[64] स्वाहान्तं च पदद्वयम्[75] ।

अयं महासिद्धिमन्त्रः कीर्तितः पूर्वसूरिभिः[76] ॥३९॥
मन्त्रेणानेन संजप्तं[77] मूलं तगरसम्भवम् ।
श्रीफलं चैव[78] संदद्याच्छङ्खिनीं वशतां नयेत्[79] ॥४०॥

॥ अथ हस्तिनीवशीकरणम् ॥

ओङ्कारो धिरियुग्मं[80] च कामदेवाय चेत्यथ ।
तस्मै स्वाहेति कथितो मन्त्रः श्रेष्ठो[81] मुनीश्वरैः ॥४१॥
कपोतपिच्छं संपिष्य[82] मधुनाथ[83] निमन्त्रयेत् ।
मन्त्रेणानेन तद्दानाद्धस्तिनी वशगा भवेत्[84] ॥४२॥

॥ अथाङ्गरागादिकमुच्यते ॥

संमूर्छितानुरागाणां रत्युत्सवविलासिनाम् ।
कामिनां[85] प्रीतिजननमङ्गरागादिकं ब्रुवे[86] ॥४३॥
चन्दनोशीरपथ्यार्ति (?) लोध्राम्रत्वक्समुद्भवः[87] ।
लेपः स्वेदजदौर्गन्ध्यं हरत्याशु विलासिनाम् ॥४४॥
पथ्या निम्बदलं[88] लोध्रं दाडिमीसप्तपर्णयोः[89] ।
वल्कलश्च[90] प्रलेपो ऽयमङ्गदुर्गन्धिनाशनः[91] ॥४५॥
चिञ्चाफलं करञ्जस्य[92] बीजैरथ[93] हरीतकी ।
बिल्वमूलेन कक्षादिदुर्गन्धिहरणं[94] द्वयम्[95] ॥४६॥
नागपुष्पागुरूशीरकोलमज्जाम्बुचन्दनैः[96] ।
लिप्ताङ्गो विनिहन्त्याशु[97] दुर्गन्धं घर्मवारिजम् ॥४७॥
खगं पीलुतरोः[98] पुष्पं तथा जम्बूफलं[99] समम् ।
एतद्देहे निदाघेषु लिप्तं घर्माम्बुनाशनम् ॥४८॥
पिचुमन्ददलाम्भोजलोध्रदाडिमवल्कलैः[100] ।
निदाघकाले लिप्ताङ्गो घर्मवारिचयं जयेत् ॥४९॥
शिरीषकेसरोशीरलोध्ररङ्गविरूक्षणात् ।
तद्रूक्षणाच्च घर्माम्बु निदाघे नैव विन्दति ॥५०॥

॥ अथ स्नानीयसुगन्धिप्रयोगः ॥

बिल्वपत्रं मरुवक[101] मशोककुसुमानि च ।
क्रमात्पुष्पाणि केतक्याः क्षिप्त्वा तैले निधापयेत्[102] ॥५१॥
आतपे शुष्कपुष्पाणि[103] ततो निष्कासयेन्नरः ।
महापरिमलं तैलं ख्यातं योग्यं विलासिनाम्[104] ॥५२॥
एलाम्बुदनखस्वर्णमांसीकर्पूरपत्रकैः[105] ।
स्नात्वा सुगन्धं परमं मूर्धजानां प्रविन्दति[106] ॥५३॥
धात्रीस्वर्णघनोशीरपथ्यामांसीविलेपनैः[107] ।
स्नात्वा मासार्धमाधत्ते केशसौरभ्यमुत्तमम्[108] ॥५४॥

॥ अथ [illegible] न्धिप्रयोगः ॥

चन्दनैलाशटीपत्रशिग्रुपथ्याम्बुतोयदैः ।
सामवैर्लेप[109] उक्तोऽयं सुगन्धिः[110] कामिवल्लभः[111] ॥५५॥
कर्पूरं कुङ्कुमं लोध्रं स्थौणेयं[112] जलमम्बुदः ।
उशीरं च समैरेभिर्लेपः[113] स्यात्सुरभिः परः[114] ॥५६॥
पत्राम्बुचन्दनोशीरकृष्णागुरुसमुद्भवः[115] ।
लेपः कृतोऽयमङ्गेषु[116] सौरभ्यं परमं दिशेत् ॥५७॥

॥ अथ सर्वोत्तमसुगन्धिप्रयोगः ॥

कस्तूरी नागकुसुमं शैलेयं चन्दनं घनः[117] ।
श्रीवासः कनकश्चन्द्रो[118] जाती स्थौणेयपूतिकम्[119] ॥५८॥
सुश्लक्ष्णपिष्टैरेभिस्तु[120] नागवल्लीदलोद्भवैः ।
रसैर्लेपः सुगन्धो ऽयमुक्तो योग्यो[122] महीभुजाम्[123] ॥५९॥
स्यात्तोयदस्य भागैकं पथ्याभागचतुष्टयम् ।
व्याधिस्थौणेयचन्द्राणां[124] प्रत्येकं भागयुग्मकम् ॥६०॥
शिलात्मजस्य[125] पञ्च स्युर्नव भागा नखस्य तु[126] ।
एभिरुक्तः सुगन्धोऽयं कस्तूरीदलसंज्ञकः[127] ॥६१॥

नखपथ्याभयाम्भोद मांसीमांसकरञ्जकाः[128] ।
समाः[129] स्वर्णाम्भसोरुक्तं प्रत्येकं भागयुग्मकम् ॥६२॥
कर्पूरागुरुकस्तूरी जातिस्थौणेयकस्य तु[130] ।
भागत्रिकं स्यात्प्रत्येकं सर्वैरेभिरिहोच्यते ॥६३॥
लेपः[131] सौरभ्यगर्भाख्यः[132] सर्वलोकमनोरमः ।
भूभुजामेव योग्योऽयमन्येषां दुर्लभः स्मृतः ॥६४॥

॥ अथ मुखवासविधिः ॥

त्वक्पत्रैलानखस्वर्णजातिभिः कारयेद्वटीम् ।
ताम्बूलयुक्ता सा भुक्ता[133] वक्त्रं सुरभितां नयेत् ॥६५॥
केसरं कोलमज्जा च स्थौणेयं[134] जातिसस्यकम्[135] ।
वटिका मधुनैतेषां[136] कृता[137] वक्त्रं सुवासयेत् ॥६६॥
मुराकिञ्जल्ककुष्ठानां चूर्णं लीढं हि सन्ध्ययोः[138] ।
कर्पूरगन्धि[139] वदनं कुर्यान्मासार्धतो ध्रुवम् ॥६७॥
काम्बोजीबीजकुष्ठोत्थं[140] चूर्णं मधुघृतान्वितम्[141] ।
यो लेढि मासं तद्वक्त्रं[142] केतकीगन्धवद्भवेत्[143] ॥६८॥
आम्रपत्ररसे क्षारं मार्गवृक्षभवं क्षिपेत् ।
संशोष्य भानुकिरणैर्भक्षेत्ताम्बूलमध्यगम्[144] ॥६९॥
प्रातः प्रतिदिनं यस्तु सुगन्धि स्यात्तदाननम्[145] ।
सर्वेषु मुखवासस्य[146] योगेष्वयमनुत्तमः ॥७०॥

इति श्रीलाडखानविनोदाय महाकवि कल्याणमल्लविरचिते
ऽनङ्गरङ्गे वशीकरणादिनिरूपणं नाम
सप्तमः स्थलः ॥ ७ ॥



# अथ अष्टमः स्थलः ।

——:०:——

॥ अथ विवाहाद्युद्देशः ॥

विद्याशौर्यविवेकधैर्यसहिते[1] शुद्धे स्वधर्मस्थिते[2]
विख्याते धनधान्यवैभवयुते[3] जाता[4] समाने कुले ।
कन्या दोषविवर्जिता गुणवती सभ्रातृका सुन्दरी
सद्भिः शास्त्रविधानतः स्मरकलायोग्या विवाह्या सदा[5] ॥ १ ॥

॥ अथ कन्याशुभलक्षणानि ॥

नीलाम्भोरुहपत्रकान्तिरथवा स्वर्णप्रभा सुन्दरी[6]
भृङ्गीनीलशिरोरुहा शशिमुखी सारङ्गशावेक्षणा ।
स्याद्यस्याश्च तिलप्रसूनसदृशी नासा सुदन्तावली[7]
सुश्रोत्रा पिकभाषिणी च जलजग्रीवाथ बिम्बाधरा[8] ॥ २ ॥

चक्राद्यङ्कितशोणपाणिचरणा क्षामोदरी स्वल्पभु-
ग्रम्भास्तम्भमनोरमोरुयुगला श्रोण्या बृहत्यान्विता[9] ।
नाभ्या चैव सुनिम्नया[10] गजगतिः शान्तात्पनिद्रालसा[11]
शीलाढ्या सुकुमारिका नरवरैः कन्या विवाह्या सदा[12] ॥ ३ ॥

॥ अथ कन्यादूषणानि ॥

क्रूरा पिङ्गलकेशलोचनवती खर्वातिदीर्घा कृशा
लम्बोष्ठी पृथुकन्धरातिबहुभुक् श्यामाधरा दन्तुरा ।
वाचाला विषमस्तनी द्रुतगतिः शूर्पश्रवाः कोपिनी
रूक्षा पल्लवजिह्विकातिकठिना[13] सश्मश्रुका[14] लोमशा ॥ ४ ॥

निद्राशोकवती[15] सदाथ चलने यस्याः प्रकम्पोऽवने[16]-
र्हास्ये चापि[17] तरङ्गितौ प्रभवतो गण्डौ[18] भृशं चञ्चला[19] ।

अङ्गुष्ठादधिका भवेत्तदुपगा पादे तथानामिका
यान्ता नो धरणीं स्पृशेदथ भवेन्मध्या तु हीनाग्रका[20] ॥ ५ ॥
अज्ञाता गिरिपक्षिभूरुहनदीनक्षत्रसंज्ञा[21] च या
प्रौढा रोगसमाकुला च सरलभ्रूवल्लरी[22] निस्त्रपा ।
गण्डौ कूपयुगान्वितौ[23] च दधती[24] हीनाधिकाङ्गी तथा
दुःशीला च विवाहकर्मणि सदा त्याज्याबला पण्डितैः ॥ ६ ॥

॥ अथ जामातृलक्षणानि ॥

विद्याशौर्यधनाश्रयो[25] गुणनिधिः ख्यातो युवा सुन्दरः
साचारः[26] सुकुलोद्भवो मधुरवाग्दाता दयासागरः ।
भोगी भूरिकुटुम्बवान्स्थिरमतिः[27] पापातिहीनो बली
जामाता परिवर्णितः[28] कविवरै रेवंविधः सत्तमः ॥ ७ ॥

॥ अथ जामातृदूषणानि ॥

वृद्धो दुर्व्यसनो[29] दयाविरहितो रोगी महापापवान्
षण्ढो[30] दुष्टकुलोद्भवश्च पिशुनो द्यूते[31]ऽतिबद्धस्पृहः ।
निर्वित्तः[32] कृपणोऽतिचञ्चलमतिर्नित्यप्रवासी ऋणी
भिक्षुः स्नेहविवर्जितः सुमतिभिः कार्यो वरो नेदृशः[33] ॥ ८ ॥

॥ अथ परस्त्रीगमन निषेधः ॥

आयुःक्षतिर्विकलतात्युपहास्यता[34] च
निन्दार्थहानिलघुते[35] विगतिः[36] परत्र ।
स्यादेव यद्यपि रतेन[37] पराङ्गनायाः
प्राहुस्तथाप्यनघमित्यपि कारणेन ॥ ९ ॥
लङ्केश्वरो जनकजाहरणेन वाली
तारापहारकतयाप्यथ कीचकाख्यः[38] ।
पाञ्चालिकाग्रहणतो निधनं जगाम
तच्चेतसापि परदाररतिं न काङ्क्षेत्[39] ॥१०॥

॥ अथ कारणवशात्परस्त्रीगमनस्यानवद्यत्वमुच्यते ॥

दृष्टिप्रेम[40] पुरा भ्रमो ऽथ मनसि[41] प्रोक्तो ऽथ सङ्कल्पको
निद्रोच्छित्तिरतः[42] शरीरतनुता लज्जाविनाशस्ततः ।
वैराग्यं विषयेष्वथो निगदिते उन्मादमूर्च्छे ततो
मृत्युः स्यादिति पण्डितैः स्मरदशा उक्ता दशैवं क्रमात् ॥११॥

उर्वशीसुरतचिन्तया ययौ
संक्षयं किल[43] पुरूरवा नृपः ।
रक्षणाय निजजीवितस्य त-
त्संभजेत्परवधूं न कामतः ॥१२॥

नारी चोन्नतयौवनाभिलषितं कान्तं न चेदामुया[44]-
दुन्मादं मरणं च विन्दति तदा कन्दर्पसंमोहतः[45] ।
संचिन्त्येति[46] समागतां परवधूं रत्यर्थिनीं[47] स्वेच्छया
गच्छेत्क्वापि न सर्वदा सुमतिमानित्याह वात्स्यायनः[48] ॥१३॥

अपि द्विजश्रोत्रियभूपमित्र-
संबन्धिभार्या[49] यदि पञ्चभुक्ताः ।
स्युस्ताश्च दोषाय न तत्र गच्छे[50]-
द्धेतौ पुमान्कामत एव नैव[51] ॥१४॥

॥ अथागम्याः स्त्रिय उच्यन्ते ॥

कन्या प्रव्रजिता सती रिपुवधूर्मित्राङ्गना रोगिणी
शिष्या[52] ब्राह्मणवल्लभाथ[53] पतितोन्मत्ता च संबन्धिनी ।
वृद्धाचार्यवधूश्च गर्भसहिता ज्ञाता महापापिनी
पिङ्गा कृष्णतमा सदा बुधजनैस्त्याज्या इमा योषितः ॥१५॥

॥ अथ दूत्य उच्यन्ते ॥

मालाकारवधूः सखी च विधवा धात्री नटी शिल्पिनी
सैरन्ध्री प्रतिगेहिकाथ रजकी दासी च संबन्धिनी ।

बाला प्रव्रजिता च भिक्षुवनिता तक्रस्य विक्रेतृका[54]
मान्या[55] कारुवधूर्विदग्धपुरुषैः प्रेष्या इमा दूतिकाः[56] ॥१६॥

॥ अथ सुखसाध्यालक्षणानि ॥

निर्लज्जा, विधवा, कलासु कुशला, गोष्ठीपरा, दुर्भगा
क्लीबस्थूलकठोरवामनजरद्वैरूप्यभार्यास्तु याः[57] ।
द्वारावस्थितिशीलिकातिचपला वन्ध्या महामानिनी[58]
प्रत्यग्रा[59] तरुणी महाविरहिणीः साध्याः सुखेनाङ्गनाः[60]॥१७॥

॥ अथानुरागिणीलक्षणानि ॥

लज्जां विधत्ते[61] ऽभिमुखं[62] न पश्ये-
त्पादेन भूमिं विलिखेत्स्थिता[63] च ।
व्यनक्ति गात्रं कुरुते च हास्यं
दृष्टा[64] कटाक्षा[65] नयने विदध्यात ॥१८॥

पृष्टास्फुटं[66] सस्मितमेव[67] वाक्यं
शनैर्वदेच्चानुसरेद्व्रजन्तम्[68] ।
विलोक्य तं[69] व्याजकथाप्रसङ्गा-
दुच्चैर्वदेत्स्वं[70] परिदर्शयन्ती ॥१९॥

तन्मित्रवर्गे प्रणयं विदध्या-
दित्यादिवार्तामसकृच्च पृच्छेत् ।
कति स्त्रियो ऽस्यालयगाः सुरूपाः
कस्यामयं प्रेम भृशं विधत्ते[71] ॥२०॥

मृद्नाति[72] दृष्टा[73] स्वकुचं करेण
संस्फोटयेदङ्गुलिकाः[74] सजृम्भम् ।

भूषाविहीना न ददाति तस्मै
स्वदर्शनं याचितमप्यजस्रम् ॥२१॥

पुष्पादिना हन्ति तथातितारं[75]
संकासयेन्मार्ष्टि[76] भुजं करेण ।
व्याजेन गच्छेत्सदनं कराङ्घ्रि-
वक्त्रेषु घर्माम्बु वहेद्विलोक्य[77] ॥२२॥

इत्यादिचिह्नैरनुरागयुक्तां[78]
ज्ञात्वा विदग्धां मृगशावकाक्षीम् ।
संप्रेषयेत्तां प्रति निर्विशङ्कं
दूतीमलं[79] कामकलाप्रवीणः[80] ॥२३॥

॥ अथ दुः [illegible] ॥

भर्तृस्नेहवती दृढैकवनिता प्रेम्णा[81] विहीना भृशं
सेर्ष्या भूरिसुता त्रपाभरयुता[82] गुर्वादिभीता[83] स्थिरा ।
प्रायेणार्थवती तथा परजनालापे विरक्ता सदा
निर्लोभा व्यभिचारकर्मणि बुधैर्दुःखेन साध्या स्मृता[84] ॥२४॥

॥ अथ सुरते त्याज्यस्थानानि[85] ॥

वह्निब्राह्मणपूज्यवर्गनिकटे नद्यां च देवालये
दुर्गादौ च चतुष्पथे परगृहे ऽरण्ये श्मशाने दिवा ।
सङ्क्रान्तौ शशिसंक्षये ऽथ[86] शरदि ग्रीष्मे ज्वरार्तौ व्रते
सन्ध्यायां च परिश्रमेषु सुरतं कुर्यान्न विद्वान्कचित् ॥२५॥

॥ अथ सुरते विहितप्रदेशाः ॥

विस्तीर्णे ललिते[87] सुधाधवलिते चित्रादिनालंकृते
रम्ये[88] प्रोन्नतचत्वरे ऽगुरुमहाधूपादिपुष्पान्विते[89] ।

सङ्गीताङ्गविराजिते स्वभवने दीपप्रभाभासुरे
निःशङ्कं सुरतं यथाभिलषितं कुर्यात्समं कान्तया ॥२६॥

इति श्रीलाडखानविनोदाय महाकवि कल्याणमल्लविरचिते
ऽनङ्गरङ्गे विवाहाद्युपदेशनिरूपणं नाम
अष्टमः स्थलः ॥ ८ ॥



# अथ नवमः स्थलः ।

॥ अथ बाह्यसम्भोगविधानम् ॥

मतिमानुपभोगपूर्वकं
सुरतं संविदधीत[1] कान्तया ।
परिरम्भणमेव पण्डितैः
प्रथमं तेषु निगद्यते ऽष्टधा । ॥ १ ॥

वृक्षाधिरूढं तिलतण्डुलाख्यं
लालाटिकं जाघनविद्धके च[2] ।
ऊरूपगूढाह्वयदुग्धनीरे[3]
तत्राष्टमं वल्लरिवेष्टितं स्यात् ॥ २ ॥

॥ अथ ------------ ॥

चरणकमलमेकेनाङ्घ्रिणाक्रम्य भर्तु-
रपरपदसरोजेनाश्रयन्ती[4] तदूरुम् ।
तरुमिव भुजवल्ल्यावेष्ट्य[5] चुम्बेन्नताङ्गी
कथितमिह मुनीन्द्रैस्तद्धि वृक्षाधिरूढम् ॥ ३ ॥

भुजयुग्मविपर्ययं मिथो
घटयेच्चेन्मिथुनं[6] सुनिश्चलम् ।
तिलतण्डुलसंज्ञकं तदा
परिरम्भं कथयन्ति सूरयः ॥ ४ ॥

मिथो ललाटाक्षिकपोलवक्त्र-
हृद्बाहुवल्लीर्मिथुनं घटेत ।

स्मातिरेकाद्यदि निस्तरङ्गं
   ललाटिकं तत्प्रवदन्ति सन्तः   ॥ ५ ॥

जघनपरिसरस्थं[8] श्रोणिदेशं स्वभर्तु-
   र्निजभुजलतिकाभ्यां गाढमालिङ्ग्य रागात् ।
लुलितवसनकेशा[9] चुम्बनं यत्र कुर्या-
   त्स्फुटमिह परिरम्भं जाघनं तं वदन्ति   ॥ ६ ॥

स्थितं[10] पतिं मीलितनेत्रयुग्मं
   पश्चात्प्रविश्येद्वनिता कुचाभ्याम्[11] ।
गृह्णात्यसौ तामपि विद्धकाख्य[12]-
   मालिङ्गनं तन्मुनिभिः प्रदिष्टम्   ॥ ७ ॥

उद्दामकामोन्मथितोऽङ्गनाया[13]
   ऊरुद्वयं स्वोरुयुगेन यत्र[14] ।
आपीडयेत्कान्त उदीरितं त-
   दूरूपगूढं परिरम्भणं हि[15]   ॥ ८ ॥

अङ्केऽथ तल्पे[16] निजसंमुखस्थां
   कान्तां[17] समालिङ्गति यत्र कान्तः[18] ।
मिथः प्रवेशं कुरुतो निजाङ्गैः
   स्यात्क्षीरनीरं परिरम्भणं तत्[19]   ॥ ९ ॥

वल्लीव वृक्षं सरलाङ्गयष्टिः[20]
   पतिं समालिङ्गति यत्र कान्ता[21] ।
चुम्बेच्च[22] रागात्कृतमन्दसीत्का
   प्रोक्तं बुधैर्वल्लरिवेष्टितं तत्[23]   ॥१०॥

॥ अथ चुम्बनभेदाः ॥

अधराक्षिकपोलमस्तकं
वदनान्तःस्तनयुग्मकन्धरे ।
विहितानि पदानि पण्डितैः
परिरम्भादनु चुम्बनस्य हि[24] ॥११॥

कक्षायुगं मन्मथमन्दिरं च
नाभेश्च मूलं स्मरलोलचित्ताः ।
चुम्बन्ति लाटा निजदेशसात्म्या-
न्नास्त्यन्यतश्चुम्बनगीतिरेषा[25] ॥१२॥

नारीमुखान्ते वदनं स्वकीयं
समानयेद्यत्र बलेन कान्तः ।
सा नैव चुम्बेदतिकोपयुक्ता[26]
स्याच्चुम्बनं तन्निमिताभिधानम्[27] ॥१३॥

दयितस्य निवेश्य वक्त्रके
निजवक्त्रं परिचुम्बिताधरम् ।
न पिबेदबला तदाननं
स्फुरिताख्यं[28] किल[29] चुम्बनं तदा ॥१४॥

करेण कान्तस्य निमील्य नेत्रे
जिह्वां मुखान्तर्विनिधाय यत्र ।
चुम्बेद्विलोला परिमीलिताक्षी
तद्घट्टिताख्यं[30] कवयो वदन्ति ॥१५॥

करेण कान्ताचुबुकं गृहीत्वा
दशोत्पतिः पश्चिमभागवर्ती ।

प्रियाधरं यत्र तु[31] तिर्यगाख्यं
   प्रोक्तं कवीन्द्रैः खलु[32] चुम्बनं तत्	॥१६॥

दन्तैर्गृहीत्वा मदनार्तिलोला[33]-
   धरं विचुम्ब्याशु दशेत्स्वभर्तुः ।
कान्तस्तदीयं कथितं मुनीन्द्रै-
   रित्युत्तरोष्ठं परिचुम्बनं हि[34]	॥१७॥

अदाय दन्तच्छदमाशु पत्युः
   कराङ्गुलीसंपुटकेन नारी ।
जिह्वाग्रदेशेन घटेद्दशेच्च[35]
   तच्चुम्बनं पीडितसंज्ञकं[36] स्यात्	॥१८॥

प्रियाधरं[37] स्वाधरसंपुटेन
   पिबेत्पतिः सापि तथैव भर्तुः ।
परस्परं प्रेमरसातिरेका-
   त्स्याच्चुम्बनं संपुटकं तदेव[38]	॥१९॥

संप्राप्तनिद्रां रहसि स्वकान्तां
   चिरागतश्चुम्बति यत्र भर्ता ।
प्रोक्तं कवीन्द्रैः प्रतिबोधसंज्ञं
   तच्चुम्बनं सर्वरसातिरेकम् ।	॥२०॥

अधरोष्ठयुगेन कामिनी
   पतिवक्त्रोष्ठयुगं स्वजिह्वया ।
परिपीड्य विचुम्ब्य नृत्यति
   कथितं[39] तद्धि समोष्ठसन्तकम्	॥२१॥

॥ अथ नखदानविधिः ॥

ग्रीवाकरोरुजघनस्तनपृष्ठकक्षा[40]-
हृत्पार्श्वगण्डविषये नखराः खराः स्युः ।
माने नवीनसुरते विरहे प्रवासे,
द्रव्यक्षये ऽथ[41] विरतौ च मदे प्रयोज्याः ॥२२॥

नीरेखता निर्मलतोज्ज्वलत्वं
वर्धिष्णुताथास्फुटितत्वमेव[42] ।
अमार्दवं[43] चेति गुणा नखानां
बुधैः षडुक्ताः किल कामशास्त्रे[44] । ॥२३॥

अव्यक्तरेखं कृतरोमहर्षं
समर्पितं गण्डकुचाधरेषु[45] ।
यत्कर्म सम्पूर्णनखप्रसूतं[46]
विज्ञास्तदेव[47] च्छुरितं वदन्ति ॥२४॥

ग्रीवाकुचे वक्रनखप्रहारो
दत्तो ऽर्धचन्द्राख्य उदीरितो ऽसौ ।
इत्येव भेदो ऽभिमुखे प्रयोज्य[48]-
स्तदा बुधा मण्डलकं वदन्ति[49] ॥२५॥

द्वित्र्यङ्गुलादधिक[50] एव नखप्रहारो
मूर्धोरुगुह्यकुचदेशसमर्पितो यः ।
रेखाह्वयं[51] मदनकेलिकलाविधिज्ञाः[52]
प्राहुस्तमेव[53] तरुणीविहितप्रभावाः[54] ॥२६॥

रेखा कृता सर्वनखैरधस्ता-
दङ्गुष्ठमाधाय[55] तु चूचुके या ।

मयूरपादं किल तां[56] वदन्ति
शशप्लुतं सर्वनखैः कुचाग्रे ॥२७॥

रेखात्रयं पृष्ठकुचेऽथ गुह्ये
कृतं[57] भवेदुत्पलपत्रवद्यत् ।
अन्वर्थसंज्ञं प्रवदन्ति तद्धि[58]
स्मर्तुं प्रवासावसरे दिशन्ति ॥२८॥

नखं प्रयुक्तं प्रणयाद्रसज्ञै-
र्यदेतदेवास्ति मनोभवस्य ।
सर्वस्वमत्यन्तसुखैकहेतु[59]-
र्नातोऽस्ति किञ्चिद्रकामिनीनाम ॥२९॥

॥ अथ दशनविधानम् ॥

नखप्रदेशेषु रदाः प्रयोज्या
ओष्ठाननान्तर्नयनानि[59] हित्वा ।
हिंकारशीत्कारविशेष[60] उक्तो
दन्तार्पणे कामकलाविदग्धैः[61] ॥३०॥

रागस्पृशः स्निग्धतराः समाना
घनाश्च सूक्ष्माः सशिखाः सभासः ।
दन्ताः[62] प्रशस्ता अथ खर्वरूक्षाः
करालबाह्या मलिनाश्चनिन्द्याः ॥३१॥

अधरस्थितरागमात्रकं[63]
रदलेख्यं[64] किल गूढकं विदुः ।
दशनच्छदगण्डपीडना-
दिदमुच्छूनकमुच्यते बुधैः ॥३२॥

दन्तोष्ठयायोगविशेषसाध्यः
प्रवालपूर्वो मणिरेष उक्तः।
अभ्यासयोगेन स[65] दम्पतिभ्यां
संसाध्यते नान्यविनोदतस्तु ॥३३॥

अधरे तिलशश्च[66] कामिना[67]
रदयुग्मेन विखण्डने कृते ।
इति बिन्दुरुदीरितो ऽखिल-
दशनैः स्यात्किल बिन्दुमालक[68] ॥३४॥

कपोलवक्षोगलभालदेशे
खण्डाभ्रकं[69] स्याद्दशनाग्रलेख्यम् ।
तन्मण्डलाकारकमङ्गनाना-
मङ्गेषु शोभां लभते नितान्तम् ॥३५॥

अखर्वसान्द्रा दशनावली या
कान्ताशरीरे क्रियते स्वभर्त्रा ।
प्रस्थानकाले स्मृतिहेतुभूता[70]
तत्कालचर्व[71] प्रवदन्ति विज्ञाः[72] ॥३६॥

॥ अथ केशग्रहणोद्देशः ॥

स्निग्धा घनाः कुञ्चितनीलवर्णाः
केशाः प्रशस्तास्तरुणीजनानाम् ।
प्रेमप्रवृध्द्यै[73] विधिनैव मन्दं[74]
ग्राह्यानरैश्चु[75]म्बनदानकाले ॥३७॥

चिकुरान्परिगृह्य[76] चुम्बते[77]
करयुग्मेन पतिः प्रियां यदि ।

समहस्तकमित्यथैकतो
　यदि हस्तेन नरङ्गरङ्गकम्[78]　　॥३८॥

परिवेष्ट्य करेण कुन्तला-
　न्मदनार्तो यदि धारयेत्प्रियाम् ।
रतिकेलिकलापकोविदाः
　कथयन्तीति भुजङ्गवल्लिकम्[79]　　॥३९॥

कर्णप्रदेश[80]स्थकचान्विगृह्य[81]
　परस्परं चुम्बति यत्र नारी ।
पतिश्च रागात्सुरतावतारे[82]
　कामावतंसः स कचग्रहः स्यात्　　॥४०॥

इति प्रदिष्टाः[83] कतिचित्प्रसिद्धाः
　क्रमान्मया[84] बाह्यरतप्रकाराः[85] ।
प्रसिद्धभावाद्बहुशोऽपरे ते
　न दर्शिता विस्तरशङ्कया च[87]　　॥४१॥

इति श्रीलाडखानविनोदाय महाकवि --　---चिते
ऽनङ्गरङ्गे बाह्यसम्भोगनिरूपणं नाम
नवमः स्थलः ॥ ९ ॥



# अथ दशमः स्थलः ।

॥ अथ सुरतभेदा निरूप्यन्ते ॥

सात्म्यानुरूपान्प्रविधाय[1] पूर्वं
विज्ञः पुमान्बाह्यरतोपचारान्[2] ।
विधिश्लथीभूतवराङ्गदेशां[3]
भजेत कान्तां रतिकेलिरङ्गे ॥ ॥ १ ॥

दृढापि नारी श्लथतामुपैति
प्रसारणादूरुयुगस्य सद्यः[4] ।
अपि श्लथा[5] संयमितोरुयुग्मा
गच्छेद्दृढत्वं सुरतप्रयोगे ॥ २ ॥

उत्तानकं तिर्यगथासिताख्यं
स्थितं तथैवानतकं रतज्ञैः[6] ।
पञ्चप्रकारं सुरतं प्रदिष्टं
तस्य प्रभेदान्क्रमतो ब्रवीमि[7] ॥ ३ ॥

॥ तत्रादावुत्तानबन्धः ॥

निधाय पादौ रमणांसयोश्चे-
दुत्तानसुप्ता रमते पुरन्ध्री ।
रतिप्रबन्धं समपादसंज्ञं
प्रोचुस्तदा भोगविधानदक्षाः[8] ॥ ४ ॥

उत्तानितायाः स्मरमन्दिरोप[9]-
स्थितस्तदूरुद्वयमुत्प्रगृह्य[10] ।

संस्थाप्य बाह्यं कटितो रमेत
कान्तस्तदा स्यात्किल नागराख्य: ॥ ५ ॥

स्त्रियो ऽङ्घ्रिमेकं विनिधाय भूमा-
वन्यं स्वमौलौ निजपादयुग्मम्[12] ।
पृष्ठ्यां[13] समाधाय रमेत भर्ता
त्रैविक्रमाख्यं करणं तदा[14] स्यात् ॥ ६ ॥

तल्पप्रसुप्ता निजपादयुग्म[15]
मूर्ध्वं विधत्ते रमणी कराभ्याम् ।
स्तनौ गृहीत्वाथ भजेत कान्ता
बन्धस्तदा व्योमपदाख्य उक्त: ॥ ७ ॥

कान्तोरुयुग्मान्तरगः स्वहस्तौ
निधाय भूमौ रमते पतिश्चेत् ।
बन्धस्तदोक्तः स्मरचक्रनामा[16]
प्रेष्ठः[17] सदा कामिजनस्य लोके ॥ ८ ॥

नारी स्वपादौ दयितस्य वक्षः-
स्थितौ समालिङ्ग्य करद्वयेन ।
किञ्चन्नतोरू[18] रमते तदासौ
प्रोक्तो मुनीन्द्रैरविदारिताख्यः[19] ॥ ९ ॥

उत्ताऽनितोरुद्वयमध्यगामी
दृढं समालिङ्ग्य भजेत यत्र ।
कान्तो[20] विलासिप्रिय एष बन्धः
सौम्याख्य उक्तः कविभिः पुराणैः ॥ १० ॥

ऊरुद्वयं[21] वक्रमुदञ्चितं च
कृत्वाम्बुजाक्षी भजते[22] पतिं चेत् ।

आनन्दकर्ता तरुणीजनानां
बन्धो ऽयमुक्तः किल जृम्भिताख्यः ॥११॥

कान्तोरुयुग्मं परिवर्तितं चे-
न्निष्पीड्य[23] कामाकुलचित्तवृत्तिः[24] ।
रमेत भर्ता यदि वेष्टिताख्यं[25]
तमेव[26] बन्धं मुनयो वदन्ति ॥१२॥

स्कन्धप्रदेशे विनिधाय जङ्घा-
मेकां स्त्रियो ऽन्यामथ संविदार्य ।
अधो[27] विनीय प्रबलं[28] रमेत
भर्ता यदा वेणुविदारितं तत् ॥१३॥

विलासिनीं[29] संहतमूरुयुग्मं
कृत्वोर्ध्वमालिङ्ग्य भजेत भर्ता ।
उद्घुग्नकः[30] स्यात्प्रमदाङ्घ्रियुग्मे
कान्तोरसिस्थे स्फुटनं[31] प्रदिष्टम् ॥१४॥

॥ अथ तिर्यग्बन्धः ॥

कान्ताङ्घ्रिमेकं हृदये स्वकीये
निधाय भर्ता शयने द्वितीयम् ।
कुर्याद्रतिं चेदिति वीणिकाख्यः[32]
प्रौढाङ्गनायाः परिकल्पनीयः[34] ॥१५॥

पार्श्वप्रसुप्तप्रमदोपरिस्थः[35]
कान्तः समालिङ्ग्य रतिं करोति ।
यत्र प्रदिष्टो मुनिभिः पुराणै-
र्बन्धस्तदा संपुटनामधेयः ॥१६॥

यद्यङ्गनाकुञ्चितपादयुग्मं
स्वनाभिदेशे परिकल्प्य भर्ता ।
रतिं प्रकुर्यादिति कर्कटाख्यं
तदा कवीन्द्रैः[36] करणं प्रदिष्टम् ॥१७॥

॥ अथोपविष्टबन्धः ॥

प्रेङ्खाविलासं प्रसभं वहन्त्या
विपर्ययाज्जङ्घयुगस्य[37] नार्याः ।
पद्मासनं स्यादथ चैकजङ्घा-
विपर्ययादुपपदं[38] प्रदिष्टम् ॥१८॥

स्वजानुयुग्मान्तरनिर्गतौ चे-
द्भुजौ स्वकण्ठे निनयेन्मृगाक्षी[39] ।
कान्तोऽपि कृत्वेति[40] विधिं प्रगच्छे[41]-
त्तदा बुधैर्बन्धुरिताख्य[42] उक्तः ॥१९॥

उक्तप्रकारौ यदि दम्पती स्वौ
भुजौ तु कृत्वा निजकूर्परस्थौ[43] ।
स्वैरं रमेते करणं प्रदिष्टं
तदा कवीन्द्रैः[44] फणिपाशसंज्ञम्[45] ॥२०॥

निधाय जङ्घायुगलं युवत्याः
स्वकीययोः कूर्परयोरथास्याः ।
कण्ठे स्वबाहू परिणीय गच्छे-
त्पतिस्तदा[46] संयमनाख्यमेतत्[47] ॥२१॥

मुखे मुखं[48] बाहुयुगे स्वबाहू[49]
जङ्घाद्वये जङ्घयुगं निवेश्य ।

गच्छेत्पतिश्चेदिति कौर्मकं स्या-
दूर्ध्वोरुयुग्मात्परिवर्तिताख्यम्[50] ॥२२॥

स्थितां स्त्रियं कुञ्चितपादयुग्मां[51]
तथैव भर्ता कृततिर्यगङ्गः ।
भजेत चेत्कामकलाविदग्धा[52]
बन्धं तदा युग्मपदं वदन्ति ॥२३॥

विलासिनीकूर्परमध्यवर्ती
कटिं स्वकीयां भ्रमयन्मुहुश्चेत्[53] ।
भजेत भर्तेति विमर्दितं[54] स्या[55]-
त्तन्मार्कटं संमुखसंगमेन ॥२४॥

॥ अथ स्थितबन्धः ॥

संवेष्टयित्वा[57] निजकूर्परेण
जान्वङ्गनाया अवलम्ब्य[58] कण्ठम् ।
रतिं प्रकुर्यादिति कूर्पराख्यो
बन्धः प्रदिष्टः स च जानुपूर्वः ॥२५॥

उक्तप्रकारे करणे यदैकः
पादो भवेदूर्ध्वगतोऽङ्गनायाः ।
तदा प्रदिष्टो हरिविक्रमाख्यो
बन्धः प्रियोऽयं तरुणीजनानाम् ॥२६॥

कण्ठं भुजाभ्यामवलम्ब्य भर्तुः
श्रोणिं निजोर्वोर्युगलेन गाढम् ।
संवेष्ट्य कुर्याद्रतमङ्गना चे-
दुक्तः कवीन्द्रैरिति कीर्तिबन्धः ॥२७॥

॥ अथ व्यानतबन्धः ॥

विन्यस्तपाण्यङ्घ्रियुगा[60] धरण्या-
मधोमुखी धेनुवदग्रसंस्था ।
सा स्यादथास्याः कटिदेशवर्ती[61]
भर्ता भजेद्धेनुकमेतदुक्तम् ॥ २८ ॥

अधोमुखीं मस्तकदोःकुचास्यै-
र्भुवं गतां क्रामति यत्र नारीम् ।
करीव भर्ता रतिलोलचित्त-
स्तदिभसंज्ञं करणं प्रदिष्टम् ॥ २९ ॥

एणसौकरकृगादभादिका-
न्यपराजकतयात्र[62] भूरिशः ।
अप्रसिद्धकरणानि नो मया
दर्शितान्यतिविनिन्दितानि च ॥ ३० ॥

॥ अथ पुरुषायितबन्धः ॥

जातश्रमं वीक्ष्य पतिं पुरन्ध्री
स्वेच्छात एवाथ रतेष्वतृप्ता[63] ।
कन्दर्पवेगाकुलिता नितान्तं
कुर्वीत तुष्ट्यै पुरुषायितं सा[64] ॥ ३१ ॥

उत्तानसुप्तं दयितं भुजाभ्या-
मालिङ्गय लिङ्गं विनिवेश्य योनौ ।
भजेन्नितम्बं परिचालयन्ती
नारी तदा स्याद्विपरीतबन्धः ॥ ३२ ॥

सुप्तस्य पुंसो जघनोपरिस्थिता[65]
संभ्रामयन्त्यङ्घ्रियुगं विकुञ्चितम् ।
चक्राकृतिः स्त्री नरविद्धिचेष्टते
तद्भ्रामराख्यं करणं[66] समीरितम् ॥ ३३ ॥

प्रेङ्खविभ्रमवती[67] स्मरयन्त्रे[68]
भर्तृलिङ्गमुपधाय पुरन्ध्री ।
भ्रामयेत्कटिमनङ्गविलोला
स्यात्तदा करणमुत्कलिताख्यम् ॥ ३४ ॥

विपरीतरते समाकुता
दरहासातिमनोरमानना[69] ।
कितवाद्य वशं गतोऽसि मे
स्मरयुद्धे विजितोऽसि चाप्यलम् ॥ ३५ ॥

इति मञ्जु रटन्त्यथाकुला[70]
सकचाकर्षणचुम्बिताधरा ।
श्रमसीलित चारुलोचना[71]
द्रवतां याति तदा[72] विलासिनी ॥ ३६ ॥

श्लथदेहलतां[73] समूर्छनां
दरसंमीलितलोचनोत्पलाम् ।
समवेक्ष्य नितान्तनिःसहा-
मवगच्छेदबलां[74] द्रुतामिति[75] ॥ ३७ ॥

करिणीं हरिणीं च गर्भिणीं
नवसूतामृतुयोगिनीं[76] कृशाम् ।

ज्वरितां च कुमारिकां रते
विपरीते परिवर्जयेत्सुधीः[77]                    ॥ ३८ ॥

॥ अथ करताडनसीत्कृतोद्देशः ॥

कामयुद्धाङ्कयुग्मं[78] स्यात्करताडनसीत्कृते ।
तत्ताडनं चतुर्धोक्तं[79] सीत्कृतं पञ्चधा स्मृतम्                    ॥ ३९ ॥

प्रसृतेनापहस्तेन,[80] मुष्टिना, समपाणिना, ।
ताडनं स्याच्चतुर्धैवं तस्य स्थानानि संब्रुवे[81]                    ॥ ४० ॥

पार्श्वे गुह्ये समतलं मुष्टिं[82] पृष्ठे ऽथ मूर्धनि ।
फणाकारं प्रसृतकं युञ्ज्याद्धृद्यपहस्तकम्                    ॥ ४१ ॥

॥ अथ ताडनभेदाः ॥

विपरीतरते[83] यदाङ्गना
हृदि मुष्ट्या परिताडयेत्पतिम् ।
करघातनकं[84] तदा बुधै-
रिति संतानितसंज्ञमुच्यते                    ॥ ४२ ॥

विस्तीर्णहस्तेन यदा रतौ[85] स्त्री
हन्यात्पतिं स्यात्स पताकसंज्ञः[86] ।
अङ्गुष्ठकेनैव कृतः प्रहारो[87]
विज्ञैः स उक्तः खलु बिन्दुमाला[88]                    ॥ ४३ ॥

साङ्गुष्ठमध्याङ्गुलिकाप्रहारं[89]
शनैः पुरन्ध्री कुरुते ऽतिरागात् ।
यत्रैष उक्तः कविभिः पुराणै-
रानन्दकृत्कुण्डलनामधेयः                    ॥ ४४ ॥

॥ अथ सीत्कृतभेदाः ॥

अथ सीत्कृतभेदांस्त[90] पञ्चैव क्रमतो ब्रुवे ।
हिंकृतं स्तनितं सीत्कृतं त्कृते[91] ? फूत्कृतं तथा ॥ ४५ ॥

उच्चारो मुखनासाभ्यां हिंकृतस्याभिजायते[92] ।
स्तनितं मेघगम्भीरघोषवत्स्यात्ततः परम्[93] ॥ ४६ ॥

सीत्कृतं[94] तत्तु भुजगोच्छ्वासवत्स्यादथोत्कृतम् ।
वेणुविस्फोटनादोपतुल्यं[95] स्यादथ फूत्कृतम् ॥ ४७ ॥

मेघबिन्दुर्यथा तोये निपतेत्तद्रवाकृति ।
सीत्कृतस्येति पञ्चैव क्रमाद्भेदाः समीरिताः ॥ ४८ ॥

लावकोकिलकपोतहंसिका-[96]
नीलकण्ठरुतसंनिभान्क्रमात्[97] ।
संदधाति किल हिंकृतादिकां-
श्चित्रभोगसमये विलासिनी ॥ ४९ ॥

सुरते दशनच्छदो[98] यदा[99]
प्रमदायाः परिखण्ड्यते भृशम् ।
दयितेन तदातिरागकृ-[100]
त्क्रियते सीत्कृतमञ्जसा तया ॥ ५० ॥

॥ [illegible] पणानि ॥

निखिलसुरतचिह्नैरङ्कितांङ्गः सपत्न्या[101]
अरुणकलुषनेत्रो[102] निद्रया जीवितेशः ।
सभयमधुरवाक्यः[103] प्रातरभ्येति यस्याः
कथयति भरतस्तां[104] खण्डिताख्यां पुरन्ध्रीम् ॥ ५१ ॥

वनिता शुभवासवेश्मनि[105]
मृदुशय्यामधिवासिनी निशि ।
पतिमार्गचिरार्तिलक्षणा[106]
कथिता वासकसज्जिका बुधैः ॥ ५२ ॥

सागसं या चरणगं दयितं प्रचण्ड-
कोपैर्निरस्य बहुकोपत एव पश्चात् ।
संजायते विरहतापविलापदीना[107]
या तां वदन्ति कलहान्तरितां कवीन्द्राः ॥५३॥

मदनाकुलिताऽतिनिस्त्रपा
कृतभूषा निशि गूढचारिणी ।
सुरताय पराश्रये[108] व्रजे
त्कवयस्तामभिसारिकां जगुः[109] ॥५४॥

प्रियतममुपनेतुं प्रेषयित्वैव[110] दूतीं
स्वयमतिरतिलोला[111] याति संकेतदेशम् ।
तदनु पतिविहीनामागतां वीक्ष्य तां या
दहति बहुलतापं सोच्यते विप्रलब्धा ॥५५॥

दयिते परदेशसंस्थिते
शशिपङ्करुहचन्दनादिभिः ।
परितप्यत[112] एव यद्वपुः
कथिता सा कविभिर्वियोगिनी ॥ ५६ ॥

वैराग्यवान्सकलकेलिकलाकलापे[113]
कान्तां जहाति न समीपमनङ्गलोल्यात् ।

यस्याः स्त्रियाः सुरतसौख्यविचर्चिता[114] सा
स्वाधीनपूर्वपतिकेति बुधैः प्रदिष्टा ॥५७॥

विविधकुसुममालाभूषिताङ्गी मनोज्ञा
सुरतरसविलोला सानुरागा स्वकान्ते ।
निवसति चटुलाक्षी[115] वासगेहे चिरं या
वरकविभिरिहोक्ता सा विलोलवपिठेति ॥५८॥[116]

सुविदितपरमार्थः कामशास्त्रस्य विद्वा-
न्विविधरतिविनोदैः कामिनीनां मनांसि ।
अनुदिनमनुरागाद्रञ्जयेद्यः[117] सलीलं[118]
फलमविकलमेव[119] प्राप्नुयाज्जन्मनः[120] सः ॥५९॥

यावच्छंकरमौलिगा[121] सुरनदी गौरी तदर्धाङ्गना[122]
यावत्प्रेमवती पयोधितनया वैकुण्ठनाथे हरौ ।
वेदाभ्यासरतो विरञ्चिरपि भूर्यावद्दिनेशः शशी
भूयात्तावदनङ्गरङ्ग इति[123] प्रीत्यै सदा कामिनाम् ॥६०॥

इति श्रीमल्लाडखानविनोदाय महाकविकल्याणमल्लविरचिते
ऽनङ्गरङ्गे सुरतादिभेदनिरूपणं नाम
दशमः स्थलः ॥ १० ॥






# NOTES.

## I.

(1) IO, P 204 (and the English Translation) open with the following stanza:

दत्त्वा लाक्षां नखाग्रे तदनु सुरधुनीधौतहस्ताग्रभागं,
भंक्त्या भालस्थलाग्नौ तदनु नयनयोः कज्जलं संनिवेश्य।
कण्ठे संप्रोच्य नीले तदनु च विजयादत्तमादर्शमङ्कं,
शम्भोर्भस्मानुलिप्तेः पुलकिनि मृशती पार्वती वः पुनातु॥

(2) A remarkable reading is सत्यसंधाभिरामं of P 238.— (3) B °प्रादुर्भूताश्रुसिंधुस्तमित°; IO °भूतांबुराशिः शमित° R °भूतांबुराशिः समित°; P 238 स्तिमित°; L °मितजवतया.— (4) IO स्नावितश्च.—(5) B IO P 204 तत्पुत्रः, R तत्पुत्रं.— (6) M °दृष्ट°.—After stanza 2, V reads as follows:

तस्य भूरिगुणरत्नतोयधेः प्रेमपूर्ववचनानुरोधतः।
कौतुकाय रसिकानुरञ्जनं शास्त्रमुत्तममिदं विरच्यते॥

अम्भोजिनीबन्धुकुलप्रसूतः,
कर्पूरराजन्य उदारकीर्तिः।
तीव्रप्रतापानलदग्धशत्रुः
त्रैलोक्यचन्द्रः क्षितिपाल आसीत्॥

तस्यात्मजोऽस्ति गजमल्ल इति प्रसिद्धः
संग्रामसंगतपराजितवैरिवृन्दः।
क्षान्त्याद्यशेषशुभलक्षणसंनिवासः
चन्द्रांशुनिर्मलयशोरुचिरीकृताशः॥

(7) B तस्यैव; L °रङ्गग्रन्थं; V पुत्रो ऽस्य तस्य कुतुकार्थमनङ्ग-रङ्गं. (8) M विलास°.—(9) IO, R श्रीमन्म°; L omits महा; B कलाविदाढ्यः.—(10) B भूपमाणि°, M भूपमनु°, L भूमि·मुनि°.—L adds here the stanzas परिजनपदे°, भूयो भूयो°; and अमास्यायाः°, which are taken from the Ratirahasyam (I, 3 5. 6).—(11) M भवानि.—(12) B वचनैर्मुनीनां, P 238 वचने.—(13) B स्वभात् (=स्वभावात् ar reads P 238); M स्वभावः.—(14) IO नो जात्यादि°.—(15) L कामतत्व°. This stanza is an imitation of Ratirahasyam I, F:

संसारे पटलान्ततोयतरले सारं यदेकं परं
यस्यायं च समग्र एव विषयग्रामप्रपञ्चो मतः।
तत्सौख्यं परतश्चवेदनमहानन्दोपमं मन्दधीः
को वा विन्दति सूक्ष्ममन्मथकलावैचित्र्य मूढो जनः ॥

After this, V inserts the following stanza:

सुविदितपरमार्थः कामशास्त्रस्य विद्वान्,
विविधरतिविनोदैः कामिनीनां मनांसि।
अनुदिनमनुरागाद्रञ्जयेद्यः सलोलं
फलमविकलमेव प्राप्नुयान्मानवः सः ॥

(16) L तथा.—(17) M पूर्वपूर्वतरैस्तासु; B, IO, R, P 204, 238, and ख, ग read क्रमाच्चतुर्धा नारीणां लक्षणानि ब्रुवेऽधुना [IO तथा].—(18) L प्रान्तेरक्त, IO, M, R पीतारक्त°.—(19) IO, R दीप्त.—(20) M ग पङ्कज instead of चम्पक.—(21) L °तुल्यवद·ना रम्या, IO, R °तुच्छमदन°.—(22) M, IO मध्ये.—(23) R शुकनासिकेति.—(24) B, L °स्वरा.—(25) M मधुगन्ध्यतोष्ण-

पि; B, IO, P 238 ° गन्धयुग्मोऽग्रमपि.—(26) M, U, B, IO सा तुच्छोन्नतं.—(27) IO रत्यम्बुना सर्वदा.—(28) L R भृंग°. —(29) L चित्राभोगवती, V, B, IO, R, M, ख ग °शाक्ति°; V, B° मती.—(30) L दीर्घ बाहु कृशं शिरः, M R °शिरः. —(31) L कुचैः आनिम्नाऽऽकुटिलेक्षणा.—(32) L यच्छति.—(33) M त्रपाहीना.—(34) L °स्वना.—(35) M कृपावर्जिता.—(36) B °कु-चरणा.—(37) P 204 °मदोग्रगन्धि.—(38) L मन्दगां.—(39) V रतेर्वस्त्रादित्यं; IO, P 204 भाग्या°.—(40) M प्रायो द्रवेश्चित्रि-णी.—(41) L °गुणस्मराख्यतिथिषु.—(42) L °मितास्त्राशुद्र-वेद्धस्तिनी.—(43) L द्रवान्तं.—(44) L प्रथमे च.—(45) L omits प्रीत्यै.—(46) M, B °चरणे.—L inserts (before stanza 15) the stanza of Ratirahasyam II, 1 as follows:

अंगुष्ठेपदगुल्फ जानुजघने नाभौ च वक्षस्तने,
कक्षाकण्ठकपोलदन्तवसने नेत्रे तथामूर्धनि।
शुक्लाशुक्ल विभागतोमृगदृशामङ्गेष्वनङ्गस्थिति,
रुर्ध्वाधोगमनेन वामपदतः पक्षद्वये लक्षयेत्।

(47) M, ख, ग add the following stanza (=Ratirahasyam I, 22):

व्रजति रतिसुखार्थी चित्रिणीमग्रयामे,
भजति दिनरजन्योर्हस्तिनीं च द्वितीये।
गमयति च तृतीये शङ्खिनीमार्द्रभावं,
रमयति रमणीयां पद्मिनीं तुर्ययामे॥

(48) ख, ग L शशियोगतो, M शिशिरागमे.—(49) L तथा.—(50) M रवौ.

# II.

(1) IO, M कक्षौ.—(2) L °जानुनि पुनर्मुष्ट्यासकृद्° ; that is to say, it omits गुल्फे–शनकैर् (stanza 3).—(3) IO, P 238 शुक्राशुक्र°—(4) M संदद्यात्कुचपेटिकां, B संदद्यात्तु चपेटकं, IO, °त्कुचपेटकं.—(5) V wrongly °मुष्ट्या सकृद्.—(6) L दन्तैर्नखैः सादरम्.—(7) M°विधौ.—(8) L नीताः.—(9) L °नयना.—(10) L गण्डपालीनितम्बे.—(11) M विदधाति रदनैः (12) L सीत्काराकारि वक्रामतिलघुनलिनीं !! B पदिपदि.—(13) IO द्रावयेत्तां.—(14) L, M, IO नखादि ; IO कृत्वा.—(15) B, M °नयनां.—(16) M युगराज्यतिथ्यां.—(17) M° द्रव-वशं.—(18) V सहर्षाम्.—(19) L छिन्द्यादाशु.—(20) M यच्छन्न-खान्यादरात्.—(21) M दोर्मूले नखरै सकच्छकलितं कुर्वन्तृतीयां तिथौ.—(22) M कुर्वन्निजां ; L कुर्याद्वशे कामिनीं.—(23) B, IO कुचं.—(24) M चञ्चुयुगलं परिपीड्य ; B, IO परिचुंब्य.—(25) B, P 204, 238 केशांश्च.—(26) L चित्रिणीमपि.—(27) L पाणि.—(28) This line is wanting in L.—(29) L स्तुतकामवा-रिनिचयां.—(30) M समालोढयेत्.—(31) M प्राश्चत्पाणिरुहैश्च लिख्य.—(32) B गंडयुगले, M ताथपलको.—(33) M दशित्वा धरं.—(34) M दिशेत्.—(35) M संकृष्येच्चिकुरान्वि°.—(36) L पाणिभ्यां.—(37) M करपाणि°.—(38) V तृतीयास्त्वलं, M तृतीयावलं, L °दिने.—(39) M कुर्यात्प्रियां.—(40) L कृतौष्ठ-पानः.—(41) L परिरभ्य रदच्छदं पिबन् सुरतेशो रतिभावको-विदः, M रदनच्छदं वचनाघातरतो ; IO, R °रसे.—(42) V

